३४ पृष्ठ—उपकारहतस्तु कर्तव्यः ।

अर्थ—उपकार से मारना चाहिये अर्थात् उपकार करके उसे ( शत्रु को ) लज्जित करना चाहिये जिससे वह मृत्यु का सा दुःख अनुभव करे ।

३५ पृष्ठ—भवत्या ब्राह्मण्या एवं भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः—

अर्थ—तुम ब्राह्मणी हो और ब्राह्मणी के पति से अलग चिता पर चढ़ने को ऋषि पाप बताते हैं।
'पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासामेव नारीणां स्त्रीधर्मोऽयम्' इति स्मृतिः।

३७ पृष्ठ—इदमीदृशम् अनित्यत्वं वीक्ष्य प्रव्रज्यायां मे द्विगुणतरो बहुमानः संवृत्तः ।

अर्थ—यह ऐसी अनित्यता देख कर संन्यास में मेरा दुगना आदर हो गया है ।

३८ पृष्ठ—प्रियं नः प्रियम् ।

अर्थ—यह बात हम सब को प्यारी है ( आनन्द देनी वाली है )।

४० पृष्ठ—राजन्! जीर्णः सर्वकार्येषु अशक्तो भवति ।

अर्थ—हे राजन्! वृद्ध सब कार्यों में असमर्थ हो जाता है।

# काव्य-संग्रहः ।



DAULAT RAM M. A., B. T.

THE KUPPUSWAMI SASTRI
RESEARCH INSTITUTE,
MADRAS.

# काव्य-संग्रहः



OR

*Selections from Sanskrit Prose and Verse with brief notes in Hindi,*

BY

**LATE Pt. DAULAT RAM, M.A., B.T.,**

*Lecturer in Sanskrit,*

**Central Training College, LAHORE.**



**DAS BROTHERS,**

PUBLISHERS & BOOKSELLERS,
ANARKALI, LAHORE.

---

1927.

*6th Edition.* *Price Anna 10.*

# FOREWORD

A need has long been felt of a suitable reading book in Sanskrit for senior students in Schools. Kavya-Sangraha is intended to supply this want.

The book contains typical extracts from Sanskrit Literature dealing with a variety of topics likely to prove interesting as well as instructive. The extracts are mostly taken directly from the originals—the sources being pointed out in the list of contents. In selecting passages I had to abridge or condense them in several cases by leaving out more difficult sentences or verses where the omission could be made without impairing the beauty of the original or affecting the context and train of reasoning. Language of the original has as far as possible been retained. Many passages from Ramayana and Mahabharata, the great epics of India have been included with the objects of introducing the students to the chaste, and inspired muse of Valmiki and Vyasa. The extract from Manusmriti gives an instructive insight into the duties of a 'student' of ancient India; while the miscellaneous verses towards the end contain some beautiful thoughts of the more renowned Sanskrit poets, and can be learnt by heart by the students with advantage. For the further benefit of the students I have added *brief* notes in Hindi. These explain allusions, more difficult expressions and peculiarities of Grammar, but are not intended to supplant a dictionary which the students should be able to consult at this stage.

DAULAT RAM.

*Note* :—Owing to the death of the author the foreword remains the same.

*Publishers.*

# विषय-सूची ।

| विषय | पृष्ठ |
|---|---|

गद्य

स्थूलदत्तस्य गृहात् अपहृत्य दूरं प्रच्छन्नः स्थापितः ।

प्रातस्तमश्वं जना इतस्ततो विचिन्वन्तोऽपि नालभन्त । तदा प्राप्तावसरा हरिशर्मवधूरमङ्गलवित्रस्तं हयचौरगवेषणव्यग्रं स्थूलदत्तमेत्योवाच–"मदीयो भर्ता ज्योतिर्विद्याविशारदो युष्मदीयमश्वमवश्यं कुतश्चित् लम्भयेत्, स किमर्थं न पृच्छ्यते" इति ।

तच्छ्रुत्वा स्थूलदत्तस्तं हरिशर्माणमाह्वयत् ।

आगत्य हरिशर्मोवाच–"ह्योऽहं विस्मृतोऽद्य अश्वे हृते कथं स्मृतिपथमागतोऽस्मि" इति ।

एवंवादिनं तं स्थूलदत्त उवाच–"ब्रह्मन् ! विस्मृतम्, नः क्षमस्व, केनाश्वोऽपहृतस्तन्नः कथय" इति ।

ततो हरिशर्मा मिथ्यारेखाः कुर्वन्नुवाच–"इतो दक्षिणसीमान्ते चौरैरश्वः प्रच्छन्नं स्थापितः, यावत् चौरैर्दूरं न नीयते तावत् त्वरितं गत्वा आनीयताम्" इति ।

तच्छ्रुत्वा धावितैर्नरैः सः तुरंगमस्तत्क्षणमेवानीतः । सर्वे हरिशर्मणः विज्ञानं प्रशंसितवन्तः ।

ततो 'विद्वान्' इति सर्वैः पूज्यमानो हरिशर्मा स्थूलदत्तस्य गृहे सुखमवसत् ।

अथ गच्छत्सु दिवसेषु राजगृहाभ्यन्तरात् भूरिसुवर्ण-

रत्नादिकं केनापि चौरेणापहृतम् ।

यदा चौरो नाज्ञायत तदा हरिशर्मणो ज्योतिर्विद्या-प्रसिद्धिं श्रुत्वा नृपस्तमानायितवान् ।

स चानीतः 'प्रातर्वक्ष्ये' इत्युवाच ।

राज्ञा वासके वासितश्च ।

तस्मिन्नेव राजकुले जिह्वानाम्नी एका चेटिकाऽऽसीत्। तया भ्रात्रा सार्धं मन्त्रयित्वा तद्धनमपहृतम् ।

सा निशीथे तद्वासकं गत्वा हरिशर्मणो विज्ञान-माहिम्ना शङ्किता जिज्ञासया द्वारि कर्णं ददौ ।

तस्मिन्नेव काले हरिशर्मा एकाकी अभ्यन्तरे स्थितो मृषाविज्ञानवादिनीं निजां जिह्वाम् एवं निनिन्द—"दुराचारे जिह्वे ! भोगलम्पटया त्वया किमिदं विहितम् । इदानीं निग्रहं सहस्व" इति ।

एतच्छ्रुत्वा 'अनेन ज्योतिर्विदा ज्ञातास्मि' इति भीता सा जिह्वाख्या चेटी युक्त्या तदन्तिकं प्रविश्य तस्य पादयोः पतित्वा तमब्रवीत्—"भो ब्रह्मन् ! इयं सा जिह्वा या त्वया अर्थहारिणीति ज्ञाता । तत् द्रव्यं मयास्यैव मन्दिरस्य पृष्ठत उद्याने दाडिमस्याधो भूतले निखातम् । शरणागता चास्मि ।

तन्मध्यात् यच्चेदं किंचित् मम हस्तगतं सुवर्णादिकं तद् गृहाण ।"

एतच्छ्रुत्वा सगर्वः स हरिशर्मा तां जगाद—"पापे ! गच्छ, अहं भूतं, भव्यं, भवत्, सर्वं जानामि । परं शरणागतायास्तव धनहारिण्या रहस्यं नोद्घाटयिष्यामि" इति ।

एवं तेनोक्ता सा चेटी कृतज्ञतां प्रकाशयन्ती प्रणम्य बहिर्गता ।

गतायां च तस्यां हरिशर्माऽचिन्तयत्—"अहो ! अनर्थे उपस्थिते महान् मेऽर्थः सिद्धः, यत् स्वजिह्वां निन्दतो मम पुरतः चेटी जिह्वा समागता । प्रच्छन्नपातका जनाः शङ्कया एव प्रकाशन्ते" ।

इत्याकलयन् हृष्टोऽसौ तां रात्रिं निनाय ।

प्रातः नृपम् उद्याने नीत्वा निखातस्थं तद्धनं प्रापयामास, 'चौराश्च काश्चिदंशमादाय पलायिता' इति शशंस ।

कथं शास्त्रं विनेदृशं ज्ञानं स्यादिति तुष्टो नृपस्तस्मै ग्रामान् दातुमैच्छत् ।

ततो मन्त्री राजानं कर्णे इत्थमुवाच—"देव ! नूनं चौरैः सह संमिलितोऽयं प्रतिभाति धूर्तः, तस्मादेषोऽन्यया युक्त्या वारमेकं परीक्ष्यताम् ।"

राज्ञा 'तथा' इति प्रतिपद्यान्तःक्षिप्तमण्डूकं सपिधानं नवं घटं स्वैरमानाय्य हरिशर्मोक्तः—"ब्रह्मन्! यद्यस्मिन् घटे यात्स्थितं तज्जानासि, तर्हि अद्य ते सुमहतीं पूजां करिष्यामि"।

तच्छ्रुत्वा नाशकालः समागत इति मत्वा विधातृप्रेरितोऽसौ हरिशर्मा बाल्ये पित्रा क्रीडाकृतं "मण्डूक" इति स्वनाम स्मृत्वा परिदेवनं कुर्वन् सहसैवमब्रवीत्—"मण्डूक! अधुना अकाण्डेऽवशस्य तव विनाशाय अयं घटः सञ्जातः" इति।

तच्छ्रुत्वा "अहो! महाज्ञानिना दैवज्ञेनाधुना भेकोऽपि विदितः" इति सर्वे तं प्रशशंसुः।

ततस्तुष्टो राजा 'महापण्डितोऽयम्' इति मन्यमानस्तस्मै हरिशर्मणे सहेमच्छत्रवाहनान् ग्रामान् प्रददौ।

क्षणाच्च स हरिशर्मा सामन्तसंनिभो जज्ञे। अथवा "असाध्यं साधयत्यर्थं हेलयाऽभिमुखो विधिः"।

---

## सुमतिसचिवकथा।

कस्मिंश्चिद्देशे शूरसेनो नाम राजाऽऽसीत्। स सुतनिर्विशेषं प्रकृतीः पालयन् सुखेन कालं निनाय।

सुमतिर्नाम तस्य मन्त्री। नृपतिस्तस्मिन्नत्यर्थं प्रीतिमानासीत्। तस्य सचिवस्य ईश्वरे परमा प्रीतिर्बभूव। 'जगतीह नक्तान्दिवं यत् किञ्चित् घटते तत् सर्वमेव शुभाय' इत्येव तस्य बुद्धिरासीत्। शुभं वाप्यशुभं किञ्चित् धीरस्यास्य चित्तं विकलयितुं न प्रभवति स्म। विधातृविहितं सर्वं स मङ्गलाय एव मन्यते स्म। "भगवता विधात्रा यदेव विधीयते तत् सर्वमेव शुभाय" इति स सर्वदैवाकथयत्।

नृपतिरपि तस्य मुखादानिशम् एवमाकर्णयन् कदाचिदचिन्तयत्—"अहो! किमप्येनं वीतधैर्यं कर्तुं नालम्। भवतु तावत् अहमस्य धैर्य्यं परीक्षिष्ये।"

अथ दैवेन नृपतेरङ्गुल्यां स्फोटकः सञ्जातः। तेन सोऽत्यर्थं क्लिश्यमानो 'मन्त्रिणमेवं विज्ञापय' इति आदिश्य काञ्चित् दूतं प्रेरितवान्।

सचिवस्तस्य मुखतः प्रवृत्तिम् एतामासाद्य स्वभावधीरतया "भगवता विधात्रा यदेव विधीयते तदेव शुभाय" इति प्रतिभाषणं प्रेषयामास।

नृपतिस्तदवगमात् कोपस्फुटितलोचनोऽवदत्—"अहो! धिगिमं जाल्मम्। यत् क्लिष्टमपि मां नानुकम्पते। तस्येदमौदासीन्यं न मया कदापि सोढव्यम्"।

अथ कदाचित् पीडयास्याङ्गुलिः स्खलिता बभूव। राजा च भूयसा क्लेशेन संशयितजीवितोऽभवत्—'मन्त्रिणं ज्ञापय' इति आदिश्य भूयः कञ्चित् दूतं प्रेरितवांश्च ॥

सचिवोऽपि निशम्यैतत् "भगवता विधात्रा यदेव विधीयते तदेव शुभाय" इति प्रतिवचनं ददौ।

नृपतिरपि श्रुत्वैतत् अचिन्तयत् 'स्वस्थश्चेत् नूनमेनं हनिष्यामि'।

अथ दिष्ट्या स रोगात् निर्मुक्तो बभूव। गतेषु दिनेषु असौ सदः समेत्य प्रजानामानन्दं वर्द्धयामास।

सचिवोऽपि राजसकाशमागत्य यथाविधि तमभिननन्द। नृपतिस्तु न मधुरवाचा तं पुनः सम्भाषयामास।

अथैकदा राजा मृगयार्थे यातुकामो मन्त्रिणं प्राह—"भो मन्त्रिन्! यथारीति मृगयागमनोद्योगं विधेहि"।

सोऽपि च 'देवपादा यथाज्ञापयन्ति' इत्युक्त्वा सर्वमेवानुष्ठितवान्।

ततः स नृपतिरश्वमारुह्य बहुभिर्लोकैरनुगम्यमानो मन्त्रिणा सह प्रतस्थे। निबिडकाननाभ्यन्तरमासाद्य अनुचरान् सर्वानादिदेश—"युष्माकं दूरमनुसरणेनालम्। मन्त्रिणानुगतोऽहं दूरतरवनमध्यमवगाहिष्ये। भवन्तश्च

सायं यावत् मे प्रत्यावर्त्तनमपेक्ष्य गृहं प्रतिनिवर्त्तन्ताम्" ।

ततो राजा मन्त्री च अश्वमारुह्य द्रुतं गभीरवनमध्यं प्रविवेश ।

सहसा कूपमेकमालोक्य नृपतिरचिन्तयत्—"अवसरोऽयं सम्यगस्माकं सङ्कल्पसिद्धेः । तृषाव्याजम् अवलम्ब्य जलानयनार्थं मन्त्रिणमादिशामि । कूपसन्निहितं चैनं कूपमध्ये पातयामि" इत्यवधार्य्य मन्त्रिणं प्राह—"सुमते ! महती मे पिपासा जाता । नाहं दूरतरं गन्तुं शक्नोमि । कूपोऽयमारात् दृश्यते । पश्य, तत्र जलमस्ति न वा" ॥

मन्त्री नृपतेराज्ञया कूपसन्निधिं गत्वा नततुण्डो यावत् जलं निरीक्षते तावद् राजा झटिति पृष्ठतस्तं कूपे निचिक्षेप ।

सचिवोऽपि पतन्नेव "भगवता विधात्रा यदेव विधीयते तदेव शुभाय" इत्युक्त्वा कूपमध्ये पपात ।

राजापि विवृत्तवदनस्तूर्णं ततः प्रतस्थे ।

तदा सन्ध्या समागतासीत् । भगवान् काश्यपेयः स्वीयमयूखान् संहृत्य अस्ताचलशिखरारोहणोन्मुखो बभूव । दिनकरविरहेण सन्तापितचित्ता धरणी तमोवसनं पिनह्येव वयसां रुतव्याजेन मानसीं व्यथां प्रकटयामास ।

श्वापदाः सघ प्रहृष्टमनसा विवरात् निष्क्रम्य समन्तात् परिधावितुमारेभिरे ।

नृपतिः कथञ्चित् वनपथात् बहिरायातुमसमर्थः सन्निहितं वृक्षमेकमारुह्य अवतस्थे । अश्वोऽपि तदधस्तात्तस्थौ ।

अथ निशीथसमयः सम्भूतः । सहसा वनभागं प्रकम्पयन्निव तत्रैव महान् कोलाहलः समुत्थितः ।

नरपतिस्तु 'कश्चिदतर्कितो विपत्पात आपतितोऽयम्' इति मत्वा यावत् पश्यति तावदारात् समागच्छतो बहून् लोकानवलोकयामास ।

तेऽपि शनैः शनैः वृक्षाभ्याशमेत्य सज्जिततुरङ्गमेकमालोक्य परस्परं कथयामासुः "सिद्धमेव साम्प्रतमस्माकमभिलषितम् इति । तुरङ्गमेन 'मानवसमागमोऽत्र' इति संसूच्यते । इदानीमेनमनुसन्धाय राजसकाशं नेष्यामः । अस्माकं नृपतिरपि श्वः प्रातश्चामुण्डायै बलिमुपहारीकृत्य सिद्धकामो भविष्यति" ।

इत्याकर्ण्य नृपतिर्वृक्षारूढः संज्ञाहीन इव पत्रान्तरालमध्यवर्ती तस्थौ ।

सहसा तेषामेकतमो "वृक्षेऽस्मिन् मानवो दृश्यते मानवो दृश्यते" इत्युच्चैरपरान् ज्ञापयामास ।

तत्क्षणमेव कश्चित् वृक्षमारुह्य राजानं बद्ध्वा वृक्षात् तस्मादवतारयामास ।

अथैनमश्वमारोप्य विजयगीतिं गायन्तः सर्वे यथागतं चालिताः ।

राजा च 'आत्मकर्म्मफलानुरूपमेतद्' इति विज्ञाय स्थाणुवत् तस्थौ ।

ते च स्वं नृपतिमुपागम्य 'आसादितोऽयं बलिः' इति निवेदयामासुः ।

राजा च 'एनं कारागृहे स्थापय' इति आदिश्य चामुण्डामन्दिरं ययौ ।

अथ क्रमेण निशावसानमभूत् । ढक्कादुन्दुभिपटहनिनादैर्नृपभवनमचिरेण पूर्णमभवत् । समीरणैः समन्ततः सञ्चाल्यमानैः रक्तध्वजैः उपशोभितं देवीमन्दिरं बभूव । राजा च परिहितरक्तवसनो रक्तचन्दनानुलिप्तो रक्तमाल्योपशोभितो "मातश्चामुण्डे ! प्रसीद प्रसीद बलिमिमं गृहाण" इति कथयन् यावत् देव्याः पुरतो वन्दिनं राजानं संस्थाप्य तस्यावयवं निरीक्षाञ्चक्रे तावत् तमङ्गुष्ठेन हीनमालोक्य "आः पापाः किमिदम्, हीनाङ्गुष्ठं नरमिमं कथं बलिरूपेण चामुण्डायै दास्यामि" इति कथयित्वा तं दूरी-

मन्त्रिणोक्तम्—"महाराज ! किमिदम्, किमेवं कथयसि, किमापतितं भवतां देवपादानाम्, कथमीदृशीमवस्थामापन्नोऽसि, कथं हि ते दृष्टिरियं सकातरा वर्तते ?" ॥

ततो राजा प्राह—"मन्त्रिन् ! सत्यमुक्तं भवता। 'भगवता विधात्रा यदेव विधीयते तदेव शुभाय' इत्यत्र नास्ति मे कश्चित् सन्देहः" इत्युक्त्वा तस्यादितो यत् वृत्तं तत् सर्वं कथयामास।

तदाकर्ण्य मन्त्री किञ्चित् विहस्य प्रोवाच—"महाराज ! ममापि कूपे निक्षेपो भगवता अनुमोदित एव। हीनाङ्गस्य भवतो मुक्तिश्चेदपि त्वत्सङ्गिनः पूर्णावयवस्य ममैव परित्राणं न कथमप्यभविष्यत्। अतो ज्ञायतामेतत् देवपादैर्यत् भगवता विधात्रा विधीयते तदेव शुभाय"।

ततस्तौ परस्परं प्रीतौ स्वराज्यं प्रतिनिवृत्तौ ॥

---

## उपमन्युकथा।

धौम्यस्यापोदस्य ऋषेः उपमन्युर्नाम शिष्य आसीत्। तमुपाध्यायः प्रेष्यामास—'वत्सोपमन्यो ! गा रक्ष' इति।

स उपाध्यायवचनाद् गा अरक्षत्। स चाहनि गा

रक्षित्वा दिनक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायः पीनमपश्यद्, उवाच चैनम् "वत्सोपमन्यो ! केन वृत्तिं कल्पयासि, पीवाऽसि दृढम्" इति ।

स उपाध्यायं प्रत्युवाच—"भो ! भैक्ष्येण वृत्तिं कल्पयामि" इति ।

तमुपाध्यायः प्रत्युवाच—"मय्यनिवेद्य भैक्ष्यं नोपभोक्तव्यम्" इति ।

स 'तथा' इत्युक्त्वा भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् ।

स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात् ।

स 'तथा' इत्युक्त्वा पुनररक्षद् ।

गा अहनि रक्षित्वा निशामुखे गुरुकुलमागत्य गुरोः पुरतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायस्तथापि पीवरमेव दृष्ट्वोवाच—"सर्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसि" इति।

स एवमुक्त उपाध्यायं प्रत्यभाषत—"भगवते! निवेद्य पूर्वम्, अपरं चरामि, तेन वृत्तिं कल्पयामि" इति ।

तमुपाध्यायः प्रत्यवदत्—"नैषा न्याय्या गुरुवृत्ति-

रन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषीत्येवं वर्तमानो लुब्धोऽसि" इति ।

स 'तथा' इत्युक्त्वा गा अरक्षद् । रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच—"वत्सोपमन्यो ! अहं ते सर्वं भैक्ष्यं गृह्णामि, न चान्यच्चरसि, पीवाऽसि भृशं केन वृत्तिं कल्पयसि" इति ।

एवमुक्तः स उपाध्यायं प्रत्युवाच—"भो ! एतासां गवां पयसा वृत्तिं कल्पयामि" इति ।

तमुवाचोपाध्यायो—"नैतन्न्याय्यम् । पय उपभोक्तुं भवतो मया नाभ्यनुज्ञातम्" इति ।

स 'तथा' इति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमुपेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायः पीवरमेव दृष्ट्वोवाच—"वत्सोपमन्यो ! भैक्ष्यं नाश्नासि, न चान्यच्चरसि, पयो न पिबसि, पीवाऽसि भृशं केनेदानीं वृत्तिं कल्पयसि" इति ।

स एवमुक्त उपाध्यायं प्रत्युवाच—"भोः ! फेनं पिबामि, यमिमे वत्सा मातृणां स्तनान् पिबन्त उद्गिरन्ति" इति ।

तमुपाध्यायः प्रत्युवाच—"एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति, तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः। फेनमपि भवान् न पातुमर्हति" इति।

स 'तथा' इति प्रतिश्रुत्य निराहारः पुनररक्षद् गाः। तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति, न चान्यच्चरति, पयो न पिबति, फेनं नोपभुङ्क्ते।

अथ स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत्। तदा तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव। ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपेऽपतत्॥

अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिनि शिष्यानवददुपाध्यायः—"मयोपमन्युः सर्वतः प्रतिषिद्धः, स नियतं कुपितस्ततो नागच्छति, चिरगतस्त्वसौ तस्मादन्वेषयत" इत्येवमुक्त्वा शिष्यैः सार्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार—"भो उपमन्यो! क्वासि वत्स, एहि" इति।

स उपाध्यायस्याह्वानवचनं श्रुत्वा प्रत्युवाचोच्चैर्—"अयमस्मिन् कूपे पतितोऽहम्" इति।

तमुपाध्यायः प्रत्युवाच—"कथं त्वमस्मिन् कूपे पतित" इति ।

स उपाध्यायं प्रत्यभाषत—"अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽस्म्यतश्चङ्क्रम्यमाणः कूपे पतित" इति ।

तमुपाध्यायः प्रत्युवाच—"अश्विनौ स्तुहि, तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्तारौ" इति ।

एवमुक्त उपाध्यायेनोपमन्युः स्तोतुमुपचक्रमे देवावश्विनौ—"स्तोतुं न शक्नोमि गुणैर्भवन्तौ,

चक्षुर्विहीनः पथिसम्प्रमोहः ।
दुर्गेऽहमास्मिन् पतितोऽस्मि कूपे,
युवां शरण्यौ शरणं प्रपद्ये ॥"

एवमादिभिः पद्यैः तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनम्—"प्रीतौ स्वः, एष तेऽपूपोऽशानैनम्" इति ॥

स एवमुक्तः प्रत्युवाच "नानृतमूचतुर्भगवन्तौ न त्वहमेतमपूपमुपभोक्तुमुत्सहे गुरवेऽनिवेद्य इति" ।

ततस्तमश्विनावूचतुः—"आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमभिष्टुताभ्यामपूपो दत्त उपभुक्तस्तेन स गुरवेऽनिवेद्य, त्वमपि तथा कुरुष्व यथा कृतमुपाध्यायेन" इति ।

स एवमुक्तः प्रत्युवाच—"एतत् प्रत्यनुनये भवन्ताव-श्विनौ, नोत्सहेऽहमनिवेद्य गुरवेऽपूपमुपभोक्तुम्" इति ।

तमश्विनावाहतुः—"प्रीतौ स्वस्तवानया गुरुभक्त्या चक्षुष्मान् भविष्यसि, श्रेयश्चावाप्स्यसि" इति ।

स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमा-गत्याभ्यवादयत्, सर्वमाचचक्षे च ।

सोऽस्य प्रीतिमान् बभूवाह स चैनम् "यथाऽश्विना-वाहतुस्तथा त्वं श्रेयोऽवाप्स्यसि, सर्वे च ते वेदाः प्रतिभा-स्यन्ति, सर्वाणि च धर्म्मशास्त्राणि" इति ॥

——:०:——

## चारुदत्तस्य धैर्य्यपरीक्षा ।

[ मिथ्याभूषणदूषितश्चारुदत्तो वधस्थानं नीयमानः चाण्डालद्वयेन अनुगम्यमानः प्रविशति ]

चाण्डालौ—अपसरत आर्य्याः ! अपसरत । एष आर्य्यचारुदत्तः—

दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् ।
दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ॥ १ ॥

[ चारुदत्तम् ] आगच्छ रे चारुदत्त ! आगच्छ ।

चारुदत्तः—पुरुषभाग्यानाम् अचिन्त्याः खलु व्यापाराः, यत्—

सर्वगात्रेषु विन्यस्तैं रक्तचन्दनहस्तकैः।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥ २ ॥

चाण्डालौ—अपसरत आर्य्याः! अपसरत। किं पश्यत?

एकश्चाण्डालः—अरे आहीन्त! पश्य पश्य—नगरीप्रधानभूते आर्य्यचारुदत्ते वध्यमाने किमन्तरिक्षं रोदिति, अथवा अनभ्रे वज्रं पतति?

द्वितीयः—नान्तरिक्षं रोदिति, नापि वज्रं पतति, महिलासहस्रमेघात् नयनाम्बुधाराः पतन्ति।

(उभौ घोषणास्थानमेत्य डिण्डिमं वादयित्वा)

शृणुत आर्य्याः! आर्य्याः शृणुत!--एष सार्थवाहस्य विनयदत्तस्य नप्ता, सागरदत्तस्य पुत्रकः आर्य्यचारुदत्तो नाम। एतेन किल अकार्य्यकारिणा गणिका वसन्तसेना अर्थकल्यवर्तस्य कारणात् शून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशेन बलात्कारेण हता। एष सलोप्त्रो गृहीतः, स्वयञ्च स्वीकरोति। ततो राज्ञा पालकेन वयम् आज्ञप्ता एतं मारयितुम्। यः कश्चित् अपरोऽपि एवं करिष्यति,

तमपि राजा एवं शासिष्यति ॥

चारुदत्तः—[ सविषादं स्वगतम् ] अहो ! वृक्षवाटिका श्मशानभूमिरिति घुष्यते । [ सर्वतोऽवलोक्य ] —

अमी हि वस्त्रान्त-निरुद्धवक्त्राः
प्रयान्ति मे दूरतरं वयस्याः ।
परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य ॥३॥

चाण्डालौ—अपसरत आर्य्याः !

एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः ।
असुवर्णं मण्डनकमपनीयतेऽद्य नगरीतः ॥४॥

अपसारणं कृतम् । विविक्तो राजमार्गः । तदानीयताम् एष दत्तवध्यचिह्नः ।

( नेपथ्ये )

हा तात ! हा प्रियवयस्य !

चारु०—[ आकर्ण्य सकरुणम् ] भोः स्वजातिमहत्तर ! इच्छाम्यहं भवतः सकाशात् प्रतिग्रहं कर्तुम् ।

चाण्डालौ—किम् ! अस्माकं हस्तात् प्रतिग्रहं करोषि ?

चारु०—शान्तं पापम् । न अपरीक्ष्यकारी दुराचारः

पालक इव चाण्डालः। तत् परलोकार्थं पुत्रमुखं द्रष्टुम् अभ्यर्थये।

चाण्डालौ—एवं क्रियताम्।

( नेपथ्ये )

हा तात ! हा पितः !

[ चारुदत्तः श्रुत्वा सकरुणम् 'भोः स्वजातिमहत्तर' इत्यादि पठति ]

चाण्डालौ—अरे पौराः ! क्षणमन्तरं दत्त, एष आर्य्य-चारुदत्तः पुत्रमुखं पश्यतु [ नेपथ्याभिमुखम् ] आर्य्य ! इत इतः। आगच्छ रे दारक ! आगच्छ।

[ ततः प्रविशति दारकमादाय विदूषकः ]

विदूषकः—त्वरय दारक त्वरय। पिता ते मार-यितुं नीयते।

दारकः—हा तात ! हा पितः !

विदूषकः—हा प्रियवयस्य ! कुत्राहं त्वां प्रेक्षिष्ये।

चारु०—[ पुत्रं मित्रञ्च दृष्ट्वा ] हा पुत्र ! हा मैत्रेय ! [ सकरुणम् ] भोः कष्टम् ! किं पुत्राय प्रयच्छामि ! [ आत्मानमवलोक्य ] यज्ञोपवीतमिदं तावदस्ति मम।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम्।

विदूषकः—भो भद्रमुखाः ! प्रियवयस्यं मुक्त्वा मां व्यापादयत ।

चारु०—शान्तं पापम् ।

चाण्डा०—अपसरत आर्य्याः ! अपसरत,—

किं पश्यत सत्पुरुषम्, अयशोवशेन प्रनष्टजीवाशम् ।
कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥७॥

पुनरपि घोषयावः । [ इति पूर्ववत् घोषयतः 'शृणुत आर्य्या इति' ] ।

[ ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः ]

स्थावरकः—[ घोषणामाकर्ण्य सवैक्लव्यम् ] कथम् ? अपापश्चारुदत्तः मार्यते । अहं निगडेन स्वामिना बद्धः । भवतु, आक्रन्दामि । शृणुत आर्य्याः ! शृणुत,—"मया पापेन रथपरिवर्तनेन वसन्तसेना जीर्णोद्यानं नीता । मम स्वामिना सा बलात्कारेण मारिता । अत्र अयम् आर्य्यो निरपराधः । [ विचिन्त्य ] कथम् दूरतया न कश्चित् शृणोति । आत्मानं प्रासादात् पातयामि । एवं कृते आर्य्यचारुदत्तो न व्यापाद्यते ।

[ इति आत्मानं प्रासादस्य गवाक्षमार्गेण पातयति, बन्धनानि च छिन्नानि । स्वयं च दैवेन अक्षतशरीरः सत्वरं चाण्डालघोषमुपगम्य ] ।

हंहो ! अन्तरमन्तरम् ।

चाण्डालौ—अरे ! कः अन्तरं मार्गयति [ स्थावरक-भाषितं श्रुत्वा ] अरे ! अपि सत्यं भणसि ?

स्थावरकः—सत्यम् ! सत्यम् ! अहमपि, मा कस्यापि कथयेदिति प्रासादे निगडेन संयम्य निक्षिप्तः शकारेण मम स्वामिना ।

[ ततः प्रविशति राज्ञः श्यालः शकारः ]

शकारः—( सहर्षम् ) पूर्णो मम कपटमनोरथः । अथ शत्रुं वध्यमानं प्रासादम् आरुह्य दृष्ट्वा प्रसीदामि ।

[ स्वप्रासादम् उपगम्य आरुह्य च स्थावरकम् अदृष्ट्वा ]

अये ! स्थावरकः प्रनष्टः । मा तेन मन्त्रभेदः कृतः स्यात् । तद् अन्विष्यामि तम् । [ इति घोषणास्थानं प्राप्तः ]

स्थावरकः—[ तं वीक्ष्य ] भट्टारकाः ! स एष आगतः ।

शकारः—अरे रे ! अन्तरम् अन्तरम् [ उपसृत्य ] पुत्रक ! स्थावरक ! एहि गच्छावः ।

स्थावरकः—ही ही अनार्य्य ! वसन्तसेनां मारयित्वा न परितुष्टः । अद्य आर्य्यचारुदत्तं हन्तुं प्रवृत्तोऽसि ?

शकारः—अहं स्त्रियं न व्यापादयामि ।

सर्वे—अरे ! त्वया मारिता, न आर्य्यचारुदत्तेन ।

शकारः—क एवं वदति !

सर्वे—ननु एष साधुः स्थावरकः ।

शकारः—अलीकम् अलीकम् । एष मया सुवर्णं चोरयन् गृहीतः, बद्ध्वा च निक्षिप्तः । अतः कृतवैर एवं भणति । [ अपवारितकेन सुवर्णकटकम् उत्कोचरूपेण स्थावरकाय प्रयच्छति ] पुत्रक ! इदं गृहीत्वा अन्यथा भण ।

स्थावरकः—पश्यत पश्यत भट्टारकाः ! अहो ! सुवर्णेन मां प्रलोभयति ।

शकारः—(चपलतया कटकम् आच्छिद्य) एतत् तत् सुवर्णकम्, यस्य कारणाद् मया बद्धः । [ सक्रोधम् ] अरे चाण्डालाः ! मया एष सुवर्णभाण्डागारे नियुक्तः, सुवर्णं चोरयन् मारितः, ताडितश्च । न विश्वासः तद् अस्य पृष्ठं तावत् पश्यत ।

चाण्डालौ—[ दृष्ट्वा ] शोभनं भणति, वितप्तश्चेटः किं न प्रलपति ।

स्थावरकः—आश्चर्यम् ! ईदृशं दासत्वम्, यत् सत्यम् अपि न विश्वसन्ति । [ सकरुणम् ] आर्य्यचारुदत्त ! एतावान् मे विभवः [ इति पादयोः पतति ] ।

चारु०—

उत्तिष्ठ भोः! पतित-साधुजनानुकम्पिन्!
निष्कारणोपगतबान्धव! धर्मशील!!
यत्नः कृतोऽपि सुमहान् मम मोक्षणाय,
दैवं न संवदति, किं न कृतं त्वयाऽद्य ॥ ८ ॥

चाण्डालौ [स्थावरकं प्रति] निष्क्रम रे मिथ्या-भाषिन्? [इति निष्क्रामयतः]।

शकारः—अरे! शीघ्रं मारयत एनम्।

दारकः—चाण्डालौ! मां मारयत, मुञ्चत पितरम्।

शकारः—सपुत्रमेव एतं मारयत।

चारु०—सर्वम् अस्य मूर्खस्य संभाव्यते। तद् गच्छ पुत्र! मातुः समीपम्।

दारकः—किं मया गतेन कर्तव्यम्?

चारु०—

आश्रमं वत्स गन्तव्यं गृहीत्वाऽद्यैव मातरम्।
मा पुत्र! पितृदोषेण त्वमप्येवं गमिष्यसि ॥ ९ ॥

तद् वयस्य मैत्रेय! एनं गृहीत्वा व्रज।

विदूषकः—मित्र! एवं त्वया ज्ञातव्यम्, त्वया विना नाह प्राणान् धारयिष्यामि।

चारु०—वयस्य! स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्यागः।

विदूषकः—[ स्वगतम् ] तथापि प्रियवयस्यं विना न शक्नोमि जीवितुम् । तद् ब्राह्मण्यै दारकं समर्प्य प्राणान् त्यक्त्वा मित्रम् अनुगमिष्यामि । [ प्रकाशम् ] भो मित्र ! पराणयामि एतं लघु । [ इति सकण्ठग्रहं पादयोः पतति ]

[ दारकोऽपि रुदन् पतति ]

शकारः—भोः ! सपुत्रं चारुदत्तं मारयत ।

चाण्डाल—नैषा राजाज्ञा 'सपुत्रं चारुदत्तं व्यापादयत' इति । तत् निष्क्रम रे दारक ! [ इति निष्कामयतः ] इदं तृतीयं घोषणास्थानम् [ पुनर्घोषयतः ]

शकारः—अर चाण्डालौ ! लोका न विश्वसन्ति । एष च स्वजिह्वया न वदति । तद् एतेन वंशदण्डेन ताडयित्वा ताडयित्वा प्रेरयत भाषितुम्—'मया हता वसन्तसेना' इति ।

चाण्डालौ—[ प्रहारमुद्यम्य ] रे चारुदत्त ! भण ! भण !

चारु०—

मया खलु नृशंसेन लोकद्वयमजानता ।
नारीरत्नं विशेषेण

[ शकारमुद्दिश्य ]

शेषमेषोऽभिधास्यति ॥१०॥

शकारः—व्यापादिता ।

चारु०—एवमस्तु ।

[ चाण्डालो अन्योन्यम् ]

प्रथमः—अरे ! त्वदीया वध्यपालिका ।

द्वितीयः—अरे ! त्वदीया वध्यपालिका ।

प्रथमः—अरे ! यदि मदीया तद् मुहूर्तं तिष्ठतु ।

द्वितीयः—किमर्थम् ?

प्रथमः—मृत्युसमयेऽहं पित्रा भणितः—"पुत्र वीरक ! यदि तव वध्यपालिका भवति, मा सहसा व्यापादयासि वध्यम् । यतः कदाऽपि कोऽपि साधुरर्थं दत्त्वा वध्यं मोचयति । कदाऽपि राज्ञः पुत्रो भवति, तेन उत्सवेन वध्यानां मोक्षो भवति । कदाऽपि हस्ती बन्धं खण्डयति, तेन संभ्रमेण वध्यानां मोक्षो भवति। कदाऽपि राजपरिवर्त्तो भवति, तेन वध्या मुच्यन्ते ।"

शकारः—भोः ! शीघ्रं मारयत । किम् असम्बद्धं मन्त्रयथः ? [ इत्युक्त्वा चेटं गृहीत्वा एकान्ते स्थितः ]

चाण्डालः—आर्य्य-चारुदत्त ! राजनियोगः खलु अपराध्यति, न खलु वयम्, तत् स्मर, यत् स्मर्तव्यम् ।

[ चारुदत्तः सविषादं तूष्णीं वध्यशिलायाम् उपविशति ]

चाण्डालः—चारुदत्त ! भीतोऽसि किम् ?

चारुदत्तः—[ सहसोत्थाय ] मूर्ख !

न भीतो मरणादस्मि केवलं दूषितं यशः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥ ११ ॥

चाण्डालः—आर्य्य-चारुदत्त ! गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते, किं पुनर्जना मरणभीरुका मानवा वा । लोके कोऽपि उत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते—

उत्तिष्ठत्पततो वसनपातिका शवस्य पुनरस्ति ।
एतानि हृदये कृत्वा सन्धारयात्मानम् ॥ १२ ॥

शकारः—न तावद् गामिष्यामि। चारुदत्तं व्यापाद्यमानं तावत् पश्यामि । [ परिक्रम्य दृष्ट्वा ] कथमुपविष्टः ।

[ ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च ]

[ चारुदत्तगृहं गच्छन्तौ राजमार्गे जनसमूहमवलोक्य कर्णं दत्त्वा डिण्डिमं शृणुतः ] ।

भिक्षुः—[ श्रुत्वा ससम्भ्रमम् ] उपासिके ! त्वं किल चारुदत्तेन मारितासि, इति चारुदत्तो मारयितुं नीयते ।

वसन्तसेना—हा धिक् ! कथं ! मम मन्दभागिन्याः कृते आर्य्यचारुदत्तो व्यापाद्यते ? भोः ! त्वरितं त्वरितं मार्गं दर्शय ।

भिक्षुः—त्वरितं त्वरितं धावतु उपासिका, येन आर्यो जीवेत्। [ शीघ्रम् उपगम्य ] भोः ! अन्तरम् अन्तरम्।

चाण्डालः—[ खड्गम् आकृष्य प्रहर्तुम् ईहते, खड्गश्च पतितः ] अहो ! खड्गो भूमौ पतति, कदापि चारुदत्तस्य मोक्ष एव स्यात् [ कोलाहलं श्रुत्वाः ] भोः किमेतत् ?

चारुदत्तः—

प्रभवति यदि धर्म्मो दूषितस्यापि मेऽद्य,
प्रबलपुरुषवाक्यैर्भाग्यदोषात् कथञ्चित्।
सुरपतिभवनस्था यत्र तत्र स्थिता वा,
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥ १३ ॥

भिक्षुः वसन्तसेना च—[शीघ्रमुपगम्य ] आर्य्याः ! मा तावत् मा तावत्। एषाऽहं मन्ददैवा, यस्याः कारणाद् एष व्यापाद्यते। [ चारुदत्तं दृष्ट्वा ] आर्य्य-चारुदत्त ! किं नु इदम् ? [ इति पादयोः पतति ]

भिक्षुः—आर्य्य-चारुदत्त ! किं नु इदम् [ इति पादयोः पतति ]।

चाण्डालः—[ सभयम् अपसृत्य ] कथं वसन्तसेना !!! दिष्ट्या मया न मारितः साधुः।

भिक्षुः—अरे ! जीवति चारुदत्तः ?

चाण्डा०—जीवति वर्षशतम् ।

वसन्तसेना—[ सहर्षम् ] प्रत्युज्जीविताऽस्मि ।

शकारः—[वसन्तसेनां दृष्ट्वा] हा धिक् ! उत्क्रामन्ति मे प्राणाः । तत् पालायनं करोमि । [ इति पलायितः ]

चाण्डालौ—अरे ! अस्माकमीदृशी राजाज्ञा—"येन सा व्यापादिता, तं मारयत" । तत् तमेव राजश्यालम् अन्विष्यावः ।

[ निष्क्रान्तौ ]

चारुदत्तः—[ सविस्मयम् ]

वसन्तसेना किमियं द्वितीया ?
समागता सैव दिवः किमित्थम् ? ।
भ्रान्तं मनः पश्यति वा ममैनाम् ?
वसन्तसेना न मृताऽथ सैव ? ॥ १४ ॥

( नेपथ्ये )

जीवति वसन्तसेना ।

वसन्तसेना—किमिदम् आर्येण व्यवसितम् ।

चारुदत्तः—प्रिये ! 'त्वं मया हता' इति दूषितोऽहं पूर्वनिबद्धवैरेण राजश्यालेन ।

वसन्तसेना—[ कर्णौ पिधाय ] शान्तं पापम्, शान्तं पापम्, एतावान् अनर्थः ।

चारुदत्तस्य जीवितेन सफलः स्यात्! [ त्वरितम् उपसृत्य] अपयात जाल्माः! [ दृष्ट्वा सहर्षम् ] अपि ध्रियते चारुदत्तः सह वसन्तसेनया। संपूर्णाः खलु अस्मत्स्वामिनो मनोरथाः। [विचिन्त्य] तत् कृतमहापातकः कथमिव एनम् उपसर्पामि? अथवा, 'सर्वत्र आर्जवं शोभते'। [ प्रकाशम् उपसृत्य बद्धाञ्जलिः ] आर्य्य-चारुदत्त!

चारुदत्तः—ननु! को भवान्?

शर्विलकः—

येन ते भवनं भित्त्वा न्यासापहरणं कृतम्।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥१६॥

चारुदत्तः--सखे! मैवम्। त्वया असौ प्रणयः कृतः। [ इति कण्ठे गृह्णाति ]।

शर्विलकः--अन्यच्च,--

आर्य्यकेणार्य्यवृत्तेन कुलं मानं च रक्षता।
पशुवद् यज्ञवाटस्थो दुरात्मा पालको हतः ॥१७॥

चारुदत्तः—शर्विलक! योऽसौ पालकेन निष्कारणं कारागारे क्षिप्तः स त्वया मोचितः आर्य्यकः?

शर्विलकः—यथाह तत्रभवान्।

चारुदत्तः—आर्य्य! आर्य्यको राजा एवं विज्ञापयति,

"इदं राज्यं मया युष्मदनुकम्पया प्राप्तम्, तदुपभुज्यताम्।"

चारुदत्तः—युष्मदीयम् अस्मदीयमेवेति राजा विज्ञाप्यताम् ।

[ ततः प्रविशति निगडितः शकारः ]

शकारः—[ दिशोऽवलोक्य ] समन्तत उपस्थित एष राष्ट्रियबन्धुः । तद् इदानीं किं करोमि, अशरणोऽस्मि । अथवा, तमेव अशरणशरणं गच्छामि । ( उपसृत्य ) आर्य्य-चारुदत्त ! परित्रायस्व । ( पादयोः पतति ) ।

चारुदत्तः—अभयं शरणागतस्य ।

शर्विलकः—अपनीयताम् अयं चारुदत्तपार्श्वात् ।

( चारुदत्तं प्रति ) ननु ! उच्यताम् किमस्य पापस्य विधीयताम् ।

चारुदत्तः—किमहं यद् ब्रवीमि, तत् क्रियते ?

शर्विलकः—कोऽत्र संदेहः ।

शकारः—भट्टारक ! चारुदत्त ! शरणागतोऽस्मि । यत् तव सदृशं, तत् कुरु। पाहि पाहि। पुनर्न ईदृशं करिष्यामि।

पौराः—[ नेपथ्ये ] व्यापादयत, किं निमित्तमयं पातकी जीव्यते ?

[वसन्तसेना वध्यचिह्नं चारुदत्तस्य कण्ठादपनीय शकारस्य उपरि क्षिपति ]

शकारः—गर्भदासीपुत्रि ! प्रसीद प्रसीद, न पुनर्मारयिष्यामि, तत् परित्रायस्व ।

शर्विलकः—आर्य्य-चारुदत्त ! किमस्य क्रियताम् ?

चारुदत्तः—यदि मद्वचनं क्रियते, मयि चानुग्रहो भवताम्, तर्हि शीघ्रमयं मुच्यताम् । यतः—

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः, उपकारहतस्तु कर्तव्यः ॥१८॥

शर्विलकः—यथाज्ञापयसि । मुक्तो भवतु [मुक्तः शकारो निष्क्रान्तः ] ।

[नेपथ्ये कलकलः]

एषा आर्य्यचारुदत्तस्य वधूरार्य्या धूता पदे वसनाञ्चले च विलगन्तं दारकम् आक्षिपन्ती वाष्प-भरित-नयनैः जनैः निवार्यमाणाऽपि प्रज्वलिते पावके प्रविशति ।

[चन्दनकः प्रविशति]

शर्विलकः—चन्दनक ! किमेतत् ?

चन्दनकः—किं न प्रेक्षते आर्य्यः ! दक्षिणेन महाराजप्रासादं महान् जनसंमर्दः । आर्य्या धूता पावके प्रविशति । कथितं च मया तस्यै 'जीवति आर्य्यचारुदत्तः' इति, परं दुःखव्यापृततया नैव शृणोति, नैव प्रत्ययते ।

चारुदत्तः—हा प्रिये ! मयि जीवति [इति मोहमुपागतः]

शर्विलकः—अहो ! प्रमादः—

त्वरया सर्पणं तत्र, मोहमार्य्योऽत्र चागतः ।
हा धिक् ! प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥१९॥

वसन्तसेना—समाश्वासितु आर्य्यः ! तत्र गत्वा जीवयतु आर्य्याम्, अन्यथा अधीरतयाऽनर्थः संभाव्यते ।

चारुदत्तः—[ सहसोत्थाय ] हा प्रिये ! क्वासि ! देहि म प्रतिवचनम् ।

चन्दनकः—इत इत आर्य्यः । [ सर्वे परिक्रामन्ति ]

[ ततः प्रविशति यथोक्ता धूता चेलाञ्चलम् आकर्षन् विदूषकेण अनुगम्यमानो रोहसेनो रदनिका च ]

धूता—[ सास्रम् ] पुत्र ! मुञ्च माम्, मा विघ्नं कुरु । बिभेमि आर्य्यपुत्रस्य अमङ्गलाकर्णनात् । [ इत्युत्थाय पावकाभिमुखं परिक्रामति ]

रोहसेनः—मातः ! आर्य्ये ! प्रतिपालय माम्, तातोऽपि त्यक्त्वा मां गतः । त्वमपि त्यजासि । त्वया विनाऽहं न शक्नोमि जीवितुम् । [ इति त्वरितम् अञ्चलं गृह्णाति ]

विदूषकः—भवति ! भवत्या ब्राह्मण्या एवं भिन्नत्वेन चिताऽधिरोहणं पापमुदाहरन्ति ऋषयः ।

धूता—वरं पापाचरणम्, न पुनर् आर्य्यस्य अमङ्गलश्रवणम् ।

शर्विलकः—[ दृष्ट्वा ऽवलोक्य ] त्वर्य्यताम् त्वर्य्यताम् ।

आर्य्या पावकासन्ना वर्तते ।

चारुदत्तः—[ त्वरितं परिक्रामति ]

धूता—रदनिके ! अवलम्बस्व दारकम् । अहं यावत् समीहितं करोमि ।

चेटी—[ सकरुणम् ] अहमपि भट्टिनीमनुगमिष्यामि । धूता—[ विदूषकम् ] आर्य्यस्तावत् अवलम्बताम् ।

विदूषकः—समीहितसिद्ध्यै प्रवृत्तेन ब्राह्मणोऽग्रे कर्तव्यः, अतो भवत्या अहम् अग्रणीर्भवामि ।

धूता—कथं, द्वाभ्यामेव प्रत्यादिष्टास्मि । [ बालकम् आलिङ्ग्य ] पुत्र ! त्वमेव पर्य्यवस्थापय आत्मानम् अस्माकं तिलोदकदानाय । आतिक्रान्ते किं मनोरथैः [ सनिश्वासम् ] न खलु आर्य्यपुत्रस्त्वां पर्य्यवस्थापयिष्यति ।

चारुदत्तः—[ आकर्ण्य सहसोपसृत्य ] अहमेव पर्य्यवस्थापयामि बालिशम् [ इति बालकं बाहुभ्यामुत्थाप्य वक्षस आलिङ्गति ]

धूता—[ विलोक्य ] आश्चर्य्यम् ! आर्य्यपुत्रस्यैव स्वरसंयोगः [ सहर्षं निरूप्य ] दिष्ट्या आर्य्यपुत्र एव एषः । प्रियं मे प्रियम् ।

बालकः—[ विलोक्य सहर्षम् ] अहो पितैव मां

परिष्वजति। [ मातरं प्रति ] आर्य्ये ! वर्धसे, पितैव मां पर्य्यवस्थापयति।

विदूषकः—आश्चर्य्यं भोः ! एताभ्यामेव नेत्राभ्यां प्रियवयस्यः प्रेक्षितः। अहो सत्याः प्रभावः। जयतु प्रियवयस्यः।

चारुदत्तः—एहि मैत्रेय ! [ इत्यालिङ्गति ]।

चेटी—अहो संविधानकम्। आर्य्य ! वन्दे। [ इति चारुदत्तस्य चरणयोः पतति ]।

चारुदत्तः—[ पृष्ठे करं दत्त्वा ] रदनिके ! उत्तिष्ठ [ इति उत्थापयति ]

धूता—[ वसन्तसेनां दृष्ट्वा ] दिष्ट्या कुशलिनी भगिनी।

वसन्तसेना—अधुना कुशलिनी संवृत्ताऽस्मि।

[ इति अन्योऽन्यमालिङ्गतः ]

शर्विलकः—दिष्ट्या जीवितसुहृद्वर्ग आर्य्यः ?

चारुदत्तः—युष्मत्प्रसादेन।

शर्विलकः—आर्य्य ! किमस्य भिक्षोः क्रियताम् ?

चारुदत्तः—भिक्षो ! किं तव बहुमतम् ?

भिक्षुः—इदमीदृशम् अनित्यत्वं वीक्ष्य प्रव्रज्यायां मे द्विगुणतरो बहुमानः संवृत्तः।

चारुदत्तः—सखे ! दृढोऽस्य निश्चयः। तत् पृथिव्यां

सर्वविहारेषु कुलपतिरयं क्रियताम् ।

शर्विलकः--यथाऽऽह आर्य्यः ।

भिक्षुः -प्रियं नः प्रियम् ।

वसन्तसेना—सांप्रतं जीविताऽस्मि ।

शर्विलकः--स्थावरकस्य किं क्रियताम् ?

चारुदत्तः--सुवृत्त एषः अदासो भवतु ।

ते चाण्डालाः सर्वचाण्डालानामधिपतयो भवन्तु ।

चन्दनकः पृथिवीदण्डपालको भवतु ।

तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वमासीत्, वर्त्तमाने तथैव अस्तु ।

शर्विलकः--एवं यथाऽऽह आर्य्यः, परमेनं [ श्यालमुद्दिश्य ] मुञ्च मुञ्च, व्यापादयामि ।

चारुदत्तः—अभयं शरणागतस्य ।

शर्विलकः—अस्तु, तदुच्यतां, किं ते भूयः प्रियं करोमि ?

चारुदत्तः--अतः परमपि प्रियमस्ति ?-

लब्धा चारित्रशुद्धिः चरणनिपतितः शत्रुरप्येष मुक्तः,<br>
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्य्यकः शास्ति राजा ।<br>
प्राप्ता भूयः प्रियेयं, प्रियसुहृदि भवान् सङ्गतो मे वयस्यो<br>
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम् ॥२०॥

---

# पितृभक्तिफलम् ।

केनापि कारणेन रुष्टः शुक्राचार्य्यः "साम्प्रतमेव वृद्धो भव" इति ययातिं नृपं शशाप ।

तच्छ्रुत्वा ययातिरनुनयविनयादिभिस्तं तोषयामास ।

तुष्टोऽप्यसौ ययातिमाह—"न मे मृषा वाक् भवितुमर्हति । अतः कमपि प्रतिनिधिं विधायैनां जरां तदिच्छया तस्मिन् संक्रामय" इति ।

अथ वार्धकेन परिभूतोऽसौ स्वपुरं गत्वा ज्येष्ठं पुत्रं यदुमब्रवीत्—"वत्स ! पलितानि मे रोमाणि, वलीक्रान्तं च शरीरम् । न तु तृप्तश्चास्मि यौवनेन । अतस्त्वं मम जरां गृहीत्वा स्वयौवनं मह्यं प्रयच्छ । सांसारिकसुखेन तृप्तिं प्राप्य पुनः त्वदीयं वयः तुभ्यमेव प्रत्यर्पयिष्यामि ।"

यदुरुवाच—"तात ! जरया शिथिलीकृतः सितश्मश्रुर्वलीसन्ततगात्रो दुर्बलः पुरुषो निरानन्दो भवति, अतो बहुदोषवतीं जरां न जिघृक्षुरस्मि । अपरं च महाराज ! मत्तः प्रियतराः सन्ति ते बहवोऽन्ये पुत्राः, तान् कथयस्व" इति ।

तदाकर्ण्य ययातिरुवाच—"यत्त्वं मम हृदयाज्जातोऽपि मह्यं स्वं न वयो प्रयच्छासि तस्मात् तव प्रजा राज्यभाक् न भविष्यति" इति ।

यदुना प्रत्याख्यातः स द्वितीयं पुत्रं तुर्वसुं प्रत्युवाच—"तुर्वसो ! आत्मीयं यौवनं मह्यं दत्त्वा त्वं जरां प्रतिपद्यस्व। अहं च यौवनेन सांसारिकसुखमनुभूय विगततृष्णः किञ्चित्कालानन्तरं पुनस्तव यौवनं तुभ्यं प्रदास्यामि ।"

तुर्वसुरुवाच—"तात ! बलरूपान्तकारिणीं बुद्धिप्राणप्रणाशिनीं न कामये जराम् ।"

स उवाच—"अहो मम तनयो भूत्वाऽपि ममाज्ञां नानुसरासि तस्मात् संकीर्णाचाराणां पिशिताशिनां म्लेच्छानां राजा भविष्यसि ।"

एवं स देवयान्या सुतौ यदुतुर्वसू शप्त्वा शर्मिष्ठायाः पुत्रं द्रुह्युमुवाच—"द्रुह्यो ! स्वकीयं वयो मह्यं दत्त्वा मम जरां गृहाण" इति ।

स प्रत्याह—"राजन् ! जीर्णः सर्वकार्येषु अशक्तो भवति । अतो जरा मह्यं न रोचते" ।

स आह—"अहो यतो ममाङ्गजो भूत्वाऽपि त्वं मे

अथासौ यथाकामं धर्म्माविरुद्धं सुखमनुभवन् बहु-कालं यापयामास ।

तथापि आत्मतुष्टिमलभमानो यौवनेन खिन्नो ययातिः पुरुमुवाच—"वत्स ! त्वदीययौवनेन यथाकामं मया विषयाः सेविताः, परमिदमस्ति सत्यम्—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १ ॥

किं बहुना, यदस्ति पृथिव्यां तत्सर्वमेकस्यापि तृष्णा-तुरस्य पुरुषस्य सन्तोषाय नालम् । तस्मात् तृष्णां परित्य-ज्यैव सुखं भवतीति मया निश्चितम् । यतो मया अति-मात्रमुपभुक्तेऽपि लौकिके सुखे अनुदिनं तृष्णा तस्मिन्नेधते एव । अतोऽहमेनां परित्यज्य निर्द्वन्द्वो भूत्वा मनो ब्रह्मण्याधाय वनं यास्यामि । वत्स ! भद्रं तेऽस्तु । स्वयौवनेन सह मम राज्यमपि गृहाण ।" इति कथयन्नेव ययातिर्जरां प्राप्तः । पुरुश्च पुनरात्मनो यौवनं प्रतिपेदे ।

ततो ज्येष्ठपुत्रं परित्यज्य कनीयांसं पुरुमभिषेक्तुकामं राजानं ब्राह्मणादयः सर्वे वर्णा इदमब्रुवन्—"राजन् ! कथं शुक्रस्य नप्तारं देवयान्याः सुतं ज्येष्ठं यदुमतिक्रम्य पुरवे राज्यं प्रयच्छसि ?" इति ।

राजोवाच—"सर्वे सावधानं शृण्वन्तु । ज्येष्ठपुत्रेण यदुना मम नियोगो नानुपालितः । एवमन्यैस्तुर्वसुद्रुह्य्वनुप्रभृतिभिरपि भृशमवज्ञातोऽस्मि ।

अतो यः स्वधर्मं नानुतिष्ठति स ज्येष्ठोऽपि न ज्येष्ठ इति मे मतिः ।

मातापित्रोर्वचनं यः करोति स एव पुत्रः । वेदे धर्मशास्त्रेष्वपि मुनिभिरित्थं कथितं पुरा—

यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा ।
सर्वमर्हति कल्याणं कनीयानपि सत्तमः ॥२॥

अतोऽर्हः पुरुरिदं राज्यं प्राप्तुम्" इति ।

एवं पौरजानपदान् संतोष्य ययातिः पुरुं राज्येऽभिषिच्य सदारो वनं जगाम ॥

——:०:——

## भोजकुमारस्य राज्यप्राप्तिः ।

आदौ धाराराज्ये सिन्धुलसंज्ञो राजा चिरं प्रजाः पर्य्यपालयत् । तस्य वृद्धत्वे भोज इति पुत्रोऽजायत । स यदा पञ्चवर्षः, तदा पिता ह्यात्मनो जरां ज्ञात्वा मुख्यामात्यानाहूय अनुजं मुञ्जं महाबलमालोक्य पुत्रं च बालं

वीक्ष्य विचारयामास—"यद्यहं राजलक्ष्मीभारधारण-समर्थं सोदरमपहाय राज्यं पुत्राय प्रयच्छामि, तदा लोकापवादः । अथवा बालं मे पुत्रं मुञ्जो राज्यलोभाद् विषादिना मारयिष्यति, तदा दत्तमपि राज्यं वृथा, पुत्रहानिर्वंशोच्छेदश्च ।

लोभात् क्रोधः प्रभवति, क्रोधाद् द्रोहः प्रवर्तते ।
द्रोहेण नरकं याति, शास्त्रज्ञोऽपि विचक्षणः ॥१॥

मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् ।
लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥२॥

इति विचार्य्य राज्यं मुञ्जाय दत्वा तदुत्सङ्गे भोजमात्मजं मुमोच ।

ततः क्रमाद् राजनि दिवंगते संप्राप्तराज्यसम्पत्तिर्मुञ्जो मुख्यामात्यं बुद्धिसागरनामानं व्यापारमुद्रया दूरीकृत्य तत्पदे अन्यं नियोजयामास । ततो गुरुभ्यः क्षितिपालपुत्रं पाठयति ।

अथैकदा सभायां ज्योतिःशास्त्रपारंगतः सकलविद्याचातुर्य्यवान् ब्राह्मणः समागमत् । राज्ञे 'स्वस्ति' इत्युक्त्वा उपविष्टः ।

स च—"देव ! लोकोयं मां सर्वज्ञं वक्ति, तत् किमपि पृच्छ ।

कण्ठस्था या भवेद् विद्या, सा प्रकाश्या सदा बुधैः।
या गुरौ पुस्तके विद्या, तया मूढः प्रतार्यते ॥२॥"

इति राजानं प्राह।

ततो राजापि विप्रस्याहंभावं श्रुत्वा—"अस्माकं जन्मारभ्यैतत्क्षणपर्य्यन्तं यद्यन्मया चरितं यद्यत्कृतं तत्सर्वं वदतु यदि भवान् सर्वज्ञ एव" इत्युवाच।

ततो ब्राह्मणोऽपि राज्ञा यद्यत्कृतं तत्सर्वमुवाच गूढ-व्यापारमपि।

ततो राजा सर्वाण्यप्यभिज्ञानानि ज्ञात्वा तुतोष। पुनश्च पञ्च षट् पदानि गत्वा पादयोः पतित्वा इन्द्रनील-पुष्परागमरकतवैदूर्य्यखचितसिंहासने उपवेश्य राजा प्राह—

"मातेव रक्षति पितेव हिते नियुङ्क्ते,
कान्तेव चाभिरमयत्यपनीय खेदम्।
कीर्त्तिं च दिक्षु विमलां वितनोति लक्ष्मीम्,
किं किं न साधयति कल्पलतेव विद्या ॥४॥"इति।

विप्रवराय च दशाश्वानाजानेयान् ददौ।

ततः सभायामासीनो बुद्धिसागरः प्राह राजानाम्—"देव भोजस्य जन्मपत्रिकां ब्राह्मणं पृच्छ" इति।

तदाकर्ण्य मुञ्जो ब्राह्मणमुवाच—"भोजस्य जन्म-

पत्रिकां विधेहि" इति ।

ततोऽसौ ब्राह्मणः प्रत्यभाषत—"अध्ययनशालाया भाज आनेतव्यः" इति ।

मुञ्जोऽपि ततः कौतुकादध्ययनशालामलङ्कुर्वाणं भोजं भटैरानाययामास । ततः साक्षात् पितरमिव राजानमानम्य सविनयं बालकस्तस्थौ ।

ततस्तद्रूपलावण्यमोहिते राजकुमारमण्डले महीमण्डलमागतं महेन्द्रमिव, मूर्त्तिमत् सौभाग्यमिव भोजं निरूप्य राजानं प्राह दैवज्ञः—"राजन् ! भोजस्य भाग्योदयं वक्तुं विरिञ्चिरपि नालम्, कोऽहमुदरम्भरिर्ब्राह्मणः ! किञ्चित् तथापि वदामि स्वमत्यनुसारेण । भोजमितोऽध्ययनशालां प्रेषय ।" इति ततो राजाज्ञया भोजेऽध्ययनशालां गते विप्रः प्राह—

"पञ्चाशत् पञ्चवर्षाणि सप्तमासदिनत्रयम् ।
भोजराजेन भोक्तव्यः सगौडो दक्षिणापथः ॥५॥ इति ।

तत्तदाकर्ण्य राजा चातुर्य्यादपहसन्निव सुमुखोऽपि विच्छायवदनोऽभूत् ।

ब्राह्मणं च प्रेषयित्वा निशीथे शयनमासाद्य एकाकी सन् व्यचिन्तयत्—"यदि राजलक्ष्मीर्भोजकुमारं गमि-

ष्यति, तदाहं जीवन्नपि मृतः ॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः क्षणेन
सोऽप्यन्य एव भवतीति विचित्रमेतत् ॥६॥

किं च—

जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत् ।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात् तेन हन्यते ॥७॥इति"

ततश्चैवं विचिन्तयन्नभुक्त एव दिनस्य तृतीये यामे एक एव मन्त्रयित्वा वङ्गदेशाधीश्वरस्य महाबलस्य आकारणाय स्वमङ्गरक्षकं प्राहिणोत् ।

ततः वत्सराजो रथमारुह्य परिवारेण परिवृतः समागतो रथादवतीर्य्य राजानमवलोक्य प्रणिपत्योपविष्टः ।

राजा च सौधं निर्जनं विधाय वत्सराजं प्राह—

"राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति ।
ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते ॥८॥"

ततस्त्वया भोजो भुवनेश्वरीविपिने हन्तव्यः प्रथमयामे निशायाः, शिरश्चान्तःपुरमानेतव्यम् " इति ।

स चोत्थाय नृपं नत्वाह,—"देवादेशः प्रमाणम्, तथापि

भवच्छालनात् किमपि वक्तुकामोऽस्मि, ततः सापराधमपि मे वचः क्षन्तव्यम् ।

भोजे द्रव्यं न सेना वा परिवारो बलान्वितः ।
परं पोत इवास्तेऽद्य स हन्तव्यः कथं प्रभो ॥९॥" इति।

ततो राजा सर्वं प्रातः सभायां प्रवृत्तं वृत्तमकथयत् ।
स च श्रुत्वा हसन्नाह—

"त्रैलोक्यनाथो रामोऽस्ति वसिष्ठो ब्रह्मपुत्रकः ।
तेन राज्याभिषेके तु मुहूर्त्तः कथितोऽभवत् ॥१०॥

तन्मुहूर्त्तेन रामोऽपि वनं नीतोऽवनीं विना ।
सीतापहारोऽप्यभवद् वैरञ्चिवचनं वृथा ॥११॥

जातः कोऽयं नृपश्रेष्ठ ! किञ्चज्ज्ञ उदरम्भरिः ।
यदुक्त्या चन्द्रसंकाशं कुमारं हन्तुमिच्छसि ॥१२॥

उचितमनुचितं वा कुर्वता कार्य्यजातं,
परिणतिरवधार्य्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्म्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥१३॥

अन्यच्चास्मिन् हते वृद्धस्य राज्ञः सिन्धुलस्य ये परम-सुहृदो महावीरास्ते त्वन्नगरमुल्लोलकल्लोलाः पयोधय इव प्लावयिष्यन्ति । चिराद् बद्धमूलेऽपि त्वयि प्रायः पौरा

भोजं भुवो भर्त्तारं भावयन्ति। देव ! पुत्रवधः क्वापि न हिताय।" इत्युक्तं वत्सराजवचनमाकर्ण्य राजा कुपितः प्राह—"त्वमेव राज्याधिपतिर्न तु सेवकः" इति।

ततो वत्सराजः 'कालोचितमालोचनीयम्' इति मत्वा तूष्णीं बभूव।

अथ लम्बमाने दिवाकरे सौधोत्सङ्गादवतरन्तं कुपितमिव कृतान्तं वत्सराजं वीक्ष्य समेता अपि विविधेन मिषेण स्वभवनानि प्रापुर्भीताः सभासदः।

ततः स्वसेवकान् स्वागारपरित्राणार्थं प्रेषयित्वा रथं भुवनेश्वरीभवनाभिमुखं विधाय भोजकुमारोपाध्यायाकारणाय प्राहिणोदेकं वत्सराजः।

स चाह पण्डितम्—" तात ! त्वामाकारयति वत्सराजः " इति।

सोऽपि तदाकर्ण्य वज्राहत इव भूताविष्ट इव ग्रहग्रस्त इव तेन सेवकेन करेण धृत्वाऽऽनीतः पण्डितः। तं च बुद्धिमान् वत्सराजः सप्रणाममित्याह—"पण्डित ! उपविश, राजकुमारं भोजमध्ययनशालाया आनय" इति।

ततो विदितवृत्तान्तो भोजः कुपितो ज्वलन्निव शोणितेक्षणः समेत्य प्राह—"आः पाप ! राज्ञो मुख्यकुमारम्

एकाकिनं मां राजभवनाद् बहिरानेतुं तव का नाम शक्तिः" इति ।

वामचरणपादुकामादाय भोजेन तालुदेशे हतो वत्सराजः ।

वत्सराजः प्राह—"भोज ! वयं केवलं राजादेशकारिणः" इति बालं रथे निवेश्य, खड्गमपकोशं कृत्वा जगामाशु महामायाभवनम् । ततो गृहीते भोजे लोकाः कोलाहलं चक्रुः, हुंभावश्च प्रवृत्तः, किं किमिति ब्रुवाणा भटा विक्रोशन्त आगत्य सहसा भोजं वधाय नीतं ज्ञात्वा हस्तिशालामुष्ट्रशालां वाजिशालां रथशालां प्रविश्य सर्वान् जघ्नुः ।

ततः प्रतोलीषु राजभवनप्राकारवेदिकासु बहिर्द्वारविटङ्केषु पुरसमीपेषु भेरीपटहमुरजादिनिनादाडम्बरेणाम्बरं विडम्बितमभूत् ।

केचिद् विमलासिना, केचिद् विषेण, केचित् कुन्तेन, केचित् पाशेन, केचिद् वह्निना, केचित् परशुना, केचिदम्भसा धारायां ब्राह्मणयोषितो राजपुत्रा राजसेवकाः पौराश्च प्राणपरित्यागं व्यधुः ।

ततः सावित्रीसंज्ञा भोजस्य जननी विश्वजननीव

एतत् पत्रं नृपाय दातव्यम्, त्वमपि राजाज्ञां विधेहि" इति।

ततो वत्सराजस्यानुजो भ्राता भोजस्य प्राणपरित्याग-समये दीप्यमानमुखश्रियमवलोक्य प्राह—

"एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥१५॥

बलवानप्यशक्तोऽसौ धनवानपि निर्धनः।
श्रुतवानपि मूर्खश्च यो धर्म्मविमुखो जनः ॥१६॥

तुल्यजातिवयोरूपान् हृतान् पश्यसि मृत्युना।
न हि तत्रास्ति ते त्रासः वज्रवद् हृदयं तव ॥१७॥"

ततो वैराग्यमापन्नो वत्सराजः भोजं 'क्षमस्व' इत्युक्त्वा प्रणम्य तं च रथे निवेश्य नगराद् बहिर्घने तमसि गृहमागमय्य भूमिगृहान्तरे निक्षिप्य भोजं ररक्ष।

स्वयमेव कृत्रिमविद्याविद्भिः सकुण्डलं स्फुरद्वक्त्रं निमीलितनेत्रं भोजकुमारमस्तकं कारयित्वा तच्चादाय राजभवनं गत्वा राजानं नत्वा प्राह—

"श्रीमता यदादिष्टं तत् साधितम्।" इति।

ततो राजा पुत्रवधं ज्ञात्वा तमाह—"वत्सराज! खड्गप्रहारसमये तेन पुत्रेण किमुक्तम्" इति।

वत्सराजस्तत्पत्रमदात् । राजा स्वभार्य्याकरेण दीपमानाय्य तानि पत्राक्षराणि वाचयति—

"मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः,
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते !
नैकेनापि समं गता वसुमती नूनं त्वया यास्यति ॥१८॥"

राजा च तदर्थं ज्ञात्वा शय्यातो भूमौ पपात।

ततश्च देवीकरकमलचालितचेलाञ्चलानिलेन ससंज्ञो भूत्वा "देवि मां मा स्पृश हा हा ! पुत्रघातिनम्" इति विलपन् कुरर इव द्वारपालानाहूय 'ब्राह्मणानानयते'त्याह।

ततः स्वाज्ञया समागतान् ब्राह्मणान् नत्वा "मया पुत्रो हतः, तस्य प्रायश्चित्तं ब्रूत" इति वदन्तं ते तमूचुः—"राजन् ! सहसा वह्निमाविश" इति।

ततः समेत्य बुद्धिसागरः प्राह—"यथा त्वं राजाधमस्तथैव अमात्याधमो वत्सराजः। तव किल राज्यं दत्त्वा सिन्धुलनृपेण तेन त्वदुत्सङ्गे भोजः स्थापितः, त्वया च पितृव्येणान्यत् कृतम्।

राज्ञि धर्म्मिणि धर्म्मिष्ठाः पापे पापरताः सदा।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः ॥१९॥"

ततो रात्रावेव वह्निप्रवेशनं निश्चितवति राज्ञि सर्वे सामन्ताः पौराश्च मिलिताः। "पुत्रं हत्वा पापभयात् भीतो नृपतिर्वह्निं प्रविशति" इति किंवदन्ती सर्वत्र प्रसृता।

ततः बुद्धिसागरः द्वारपालमाहूय "न केनापि भूपालभवनं प्रवेष्टव्यम्" इत्युक्त्वा नृपमन्तःपुरे निवेश्य सभायामेकाकी सन् उपविष्टः।

ततो राजमरणवार्तां श्रुत्वा वत्सराजो गृहमागत्य बुद्धिसागरं नत्वा शनैः कर्णे तस्य किमपि कथयित्वा निष्क्रान्तः।

ततः मुहूर्त्तेन कोऽपि करकलितदन्तीन्द्रदन्तदण्डो विरचितप्रत्यग्रजटाकलापः कौशेयकौपीनो मूर्त्तिमांश्चन्द्रचूड इव सभां कापालिकः समागतः।

तं वीक्ष्य बुद्धिसागरः प्राह—"योगीन्द्र! कुत आगम्यते? कुत्र ते निवेशश्च? कापालिके त्वयि यश्चमत्कारो कलाविशेष ओषधविशेषो वास्ति तत् कथय।" इति।

योगी प्राह—

"ग्रामे ग्रामे कुटी रम्या निर्झरे निर्झरे जलम्।
भिक्षायां सुलभं चान्नं विभवैः किं प्रयोजनम्॥२०॥

देव! अस्माकं नैको देशः, सकलभूमण्डलं भ्रमामः, गुरूपदेशे तिष्ठामः, निखिलं भुवनतलं करतलामलकवत्

पश्यामः, सर्पदष्टं विषव्याकुलं रोगग्रस्तं शस्त्रभिन्नाशिरस्कं कालशिथिलितं यत् तत् क्षणादेव विगतसकलव्याधिसञ्चयं कुर्म्मः" इति ।

राजाऽपि कुड्यान्तर्हित एव श्रुतसकलवृत्तान्तः सभामागतः कापालिकं दण्डवत् प्रणम्य "योगीन्द्र ! रुद्रकल्प ! परोपकारपरायण ! महापापिना मया हतस्य पुत्रस्य प्राणदानेन मां रक्ष" इत्याह ।

अथ कापालिकोऽपि "राजन् ! मा भैषीः पुत्रस्ते न मरिष्यति, शिवप्रसादेन गृहमेष्यति, परं श्मशानभूमौ बुद्धिसागरेण सह होमद्रव्याणि प्रेषय" इत्यवोचत् ।

ततो राज्ञि कापालिकेन यदुक्तं तत्सर्वं तथा कुर्वति बुद्धिसागरः गतः । ततो रात्रौ गूढरूपेण भोजोऽपि तत्र नदीपुलिने नीतः । 'योगिना भोजो जीवित' इति प्रथा च समभूत् ।

ततो गजेन्द्रारूढो वन्दिभिः स्तूयमानो भेरीमृदङ्गादिघोषैर्जगद् बधिरीकुर्वन् पौरामात्यपरिवृतो भोजराजो राजभवनमगात् ।

राजा च तमालिङ्ग्य रोदिति ।

भोजोऽपि रुदन्तं मुञ्जं निवार्य्य अस्तौषीत् । ततः

संतुष्टो राजा निजसिंहासने भोजं निवेश्य छत्रचामराभ्यां भूषयित्वा तस्मै राज्यं ददौ । निजपुत्रेभ्यः प्रत्येकमेकैकं ग्रामं दत्त्वा परमप्रेमास्पदं जयन्तं भोजानिकाशे निवेशयामास ।

ततः परलोकपरित्राणो मुञ्जो निजपट्टराज्ञीभिः सह तपोवनभूमिं गत्वा परं तपस्तेपे ।

भोजभपालश्च देवब्राह्मणप्रसादाद् राज्यं पालयामास ।

# कठिनपदों का अर्थ।

—◆—◆:*:◆—◆—

## दरिद्रब्राह्मणस्य भाग्योदयः।

१ पृष्ठ—दुष्कृत = पाप। वृत्ति = जीविका। परिभ्रमन् = घूमता हुआ (परि+भ्रम्+शतृ)। आश्रयत्=सहारा लिया ( आ+श्रिञ्+लङ् )। भार्याम्=स्त्री को। कर्मकरी=नौकरानी ( काम करने वाली स्त्री ) (कर्म+कृ+ट+ङीप् )। गृहाभ्यर्णे=घर के समीप। प्रैष्यम्=नौकरी। भक्ष्य=खाने योग्य। आकण्ठम्= गले तक ठूंस कर अर्थात् खूब तृप्त हो कर। वेलाम्=समय को। वीक्षमाणः=देखता हुआ ( वि+ईक्ष्+शानच् )। विषण्णः = दुःखी ( वि+स (ष) द्+क्त )। निशीथे=आधी रात में। गौरवास्पदम् = मान ( इज्ज़त ) का स्थान। दवज्ञः = ज्योतिषी। जामातृ = जमाई।

२ पृष्ठ—प्रच्छन्नः = छुपा हुआ ( प्र+छद्+क्त )। विचिन्वतः = ढूंडते हुए ( वि+चिञ्+शतृ )। अमङ्गलवित्रस्तम् = अनिष्ट ( खराबी ) से डरे

हुए को । हयचौरगवेषणव्यग्रम्=घोड़े के चोर को ढूंडने में लगे हुए को । विशारद = चतुर । आह्वयत् = बुलाया ( आ+ ह्वेञ् + लिङ् ) । अपहृतः=चुराया ( अप+हृञ्+क्त ) । सीमान्ते= हद्द पर । त्वरितम् = शीघ्र (झटपट) । तुरंगमः= घोड़ा । भूरि=बहुत ।

३ पृष्ठ—वासके=घर में । वासितः = बसाया ( रखा ) ( वस्+णि+क्त ) चेटिका = दासी । शङ्किता= डरी हुई (शकि + क्त) । मृषा=झूठ । निनिन्द= निन्दा की ( निन्द् + लिट् ) । भोगलम्पटया= भोगों का लालच करने वाली । निग्रहम् = दण्ड ( सज़ा ) को । दाडिमस्य = अनार के । निखातम्=गाड़ा हुआ ( नि+खन्+क्त ) ।

४ पृष्ठ—रहस्यम् = गुप्तबात ( भेद ) को । उद्घाटयिष्यामि = खोलूंगा ( उद्+घट+णि+लट् ) । प्रच्छन्नपातकाः जनाः = छुपे हुए पाप ( करने ) वाले लोग । आकलयन् = समझता हुआ ( आ+कल्+णि+शतृ ) । उद्याने = बाग़ में । तुष्टः = प्रसन्न हुआ ( तुष्+क्त ) ।

५ पृष्ठ—मण्डूकम् = मेंडक का। सपिधानम् = ढकने समेत। परिदेवनम्=चीखें मारना (रोना) चिल्लाना। अकाण्डे = अचानक। भेकः= मेंडक। प्रशशंसुः = प्रशंसा करने लगे। ( प्र+ शंस्+लिट् ) । सामन्तसंनिभः = छोटा राजा (जागीरदार) के समान। हेलया = आसानी से।

## सुमतिसचिवकथा।

सचिव = मन्त्री। प्रकृतीः = प्रजाओं को।

६ पृष्ठ--नक्तन्दिवम् = रात दिन। विकलयितुम् = व्याकुल करने के लिये (वि+कल्+णि+तुमुन्)। अनिशम् = सदा। स्फोटकः = फोड़ा। क्लिश्यमानः=क्लेश को प्राप्त होता हुआ (क्लिश्+यक्+शानच्)। प्रतिभाषणम् = उत्तर को। प्रेषयामास = भेजा (प्र+इष्+णि+लिट्)। स्फुटित = प्रकट (निकली हुई)। जाल्मम् = दुष्ट, निर्दय को।

७ पृष्ठ--दिष्ट्या = भाग्यवश से। सदस् = सभा। मृगयायै = शिकार के लिये। निबिडकानन = घना जंगल।

८ पृष्ठ-- प्रत्यावर्त्तन = लौटना। गभीर = गहरा। तृषा-

व्याजम् = प्यास के बहाने को। पिपासा = प्यास। आरात् = समीप ( पास )। नततुण्डः = नीचा मुख किये हुए। तूर्णम् = शीघ्र। प्रतस्थे = चल पड़ा ( प्र+स्था+लिट् )। काश्यपेयः = सूर्य्य। मयूखान् = किरणों को। धरणी = पृथिवी। वसनम् = कपड़े को। पिनह्य = पहनकर ( अपि+नह्+(क्त्वा)ल्यप् ) रुत = आवाज़। व्यथाम् = पीड़ा (तकलीफ़) को।

९ पृष्ठ -- श्वापदाः = जंगली हिंसकजन्तु, जानवर। आरेभिरे = शुरू किया ( आ+रभ्+लिट् )। अतर्कित = अचानक। वृक्षाभ्याशम् = वृक्ष के पास। चामुण्डा = दुर्गा ( काली )। बलिम् = भेंट को। संज्ञाहीन = बेहोश।

१० पृष्ठ—स्थाणुवत् = वृक्ष के ठूंठ की तरह (निश्चल होकर)। कारागृहे = कैदख़ाने में। ढक्का = डमरु। दुन्दुभि = नगारा। पटह = ढोल। निनाद = शब्द। समीरणैः = हवा से। सञ्चाल्यमानैः॥ हिलाये (उड़ाये) जा रहे। रक्तध्वजैः = लाल रंग के झंडों से। अनुलिप्तः = लिपा हुआ

आरुणि ( उद्दालक ), वैद ( महाभारत आदि-पर्व ३ । २१ ) ॥

उपमन्युः—'उपरतो मन्युर्यस्य, व्यक्ति विशेष ऋषि ।

यंह कथा महाभारत के आदिपर्व में गुरुभक्ति के दृष्टान्त के रूप में वैशम्पायनऋषि शौनक आदि ऋषियों को सुनाते हैं ।

उपाध्यायः—'उपेत्य अधीयते यस्मात्' वेद की एव शाखा को पढ़ाने वाला, गुरु ॥ कहा भी है—
"कृत्वोपनयनं वेदान् योऽध्यापयति नित्यशः ।
सकल्पान् सरहस्यांश्च स चोपाध्याय उच्यते॥"

१३ पृष्ठ—क्षय=नाश ( समाप्ति ) । पीनम्=स्थूल ( मोटा ताज़ा ) । पीवन्=स्थूल (मोटा ताज़ा) । पीवर=स्थूल ( मोटा ताज़ा ) ।

१४ पृष्ठ—भैक्ष्योपजीविनाम्=भीख मांग कर गुज़ारा करने वाले । वृत्त्युपरोधम्=( दूसरे की ) आजीविका रोकना, रिजकमार । पयसा=दूध से । अश्नासि=खाते हो ( अश्+लट् ) । फेनम्=झाग को । उद्गिरन्ति=उगल देते हैं ( उद्+गॄ+लट् ) ।

१५ पृष्ठ—प्रतिश्रुत्य=प्रतिज्ञा करके (प्रति+श्रु+(क्त्वा)ल्यप्) अर्कपत्राणि=आक के पत्ते । प्रतिषिद्धः=मना किया गया ( प्रति+सिध्+क्त )। क्षार=खारा। तिक्त=कड़वा जैसे नीम । कटु=चरपरा जैसे पीपल (मघ) । रूक्ष=रूखा । तीक्ष्णविपाकैः= पचने के समय पेट में दाह (आग सी) पैदा करने वाले । चङ्क्रम्यमाणः=चलता हुआ (क्रमु+यङ्+शानच्) । अरण्यम्=जंगल को ।

१६ पृष्ठ—अश्विनौ = अश्विनीकुमार दो देवता । भिषक्= वैद्य । कर्तारौ = करेंगे ( कृ+लोट् ) । अभिष्टुतौ = स्तुति किये गये (अभि+स्तु+क्त) । अपूपः = पूड़ा । अशान = खा ले (अश्+लोट् ) ।

१७ पृष्ठ—प्रत्यनुनये = उत्तर में निवेदन करता हूं । अभ्यवादयत् = नमस्कार किया (अभि+वद्+ णि+लङ् । ) आचचक्षे = कह दिया (आ+चक्ष्+ लिट् ) । प्रतिभास्यन्ति = प्रकाशित होंगे (प्रति+ भास्+लृट् ) ।

---

# चारुदत्तस्य धैर्यपरीक्षा ।

वध्यस्थानम् = जल्लादख़ाना, वा सूलीघर । करवीरदामन् = करवीर (कनेर) फूलों की (दाम) माला ॥ कनेर = एक लालरङ्ग का फूल होता है, प्राचीनकाल में वध्यपुरुष के गले में इन फूलों की माला डाली जाती थी ॥ मन्दस्नेहः = समाप्त हुए तैलवाला, स्नेह— प्यार, वा तैल । स्तोक = थोड़ा ।

१८ पृष्ठ—गात्र = शरीर । हस्तकैः = पंजे । पिष्ट = पीठी । चूर्ण = आटा । विन्यस्तैः = लगाये हुए । अनभ्रे = बिना बादल के । महिला = स्त्री । नयनाम्बुधारा = आंसुओं की धाराएं । घोषणा = ढिंढोरा, मनादी करना । डिण्डिम = ढोल । सार्थवाहस्य = बनिये का । नप्ता = पोता । गणिका = वेश्या । कल्यवर्तस्य = प्रातःकाल का भोजन (अल्प) । करण्डक = करचरणी (डलिया) । सलोप्त्रः = चुराई हुई वस्तुओं समेत ।

१९ पृष्ठ—घुष्यते = घोषणा (मनादी) की जाती है ।

वक्त्रम्=मुख । नेपथ्ये=पर्दे के पीछे

प्रतिग्रहम्=दान लेना।

२० पृष्ठ—अन्तरम् २ (दत्त)=मार्ग छोड़ो । दारक=पुत्र ।

विदूषकः=( विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ) मसखरा । विदूषक=ब्राह्मणजाति, नाटक के नायक का मित्र होता है । हँसना हँसाना इसका काम होता है ।

यज्ञोपवीतम्=सब देवकार्य यज्ञोपवीत को विष्णुसव्य और पितृकार्य पितृसव्य करके किये जाते हैं । इसलिये यज्ञोपवीत देवपितृकार्यों में आवश्यक होता है ।

२१ पृष्ठ - आलपसि=पुकारता है ( आ+लप्+लट् ) । राहुगृहीतः=(राहुर्वै पृथिवीच्छाया) ग्रसा हुआ, ग्रहण से व्याप्त । अनौशीरम्=विना उशीर ( खस की जड़ ) के लेप के ।

२२ पृष्ठ—काञ्चनकलशम्=सोने का घड़ा । सवैक्लव्यम् =व्याकुलता ( घबराहट ) के साथ । निगडेन=बेड़ी से । आक्रन्दामि=चिल्लाता हूं ( आ+क्रन्द्+लट् ) । गवाक्षमार्गेण= झरोखे के रास्ते से

२३ पृष्ठ—शकारः = 'राज्ञः श्यालः शकारः' इत्युक्तः। राजा का साला।

२४ पृष्ठ—अपवारितकेन=एक ओर होकर । कटकम् = कड़ा। उत्कोचरूपेण = घूस (रिश्वत) के तौरपर। भाण्डागारे = भण्डार, store। वितप्तः = दुःखित हुआ २ ( वि+ तप्+क्त ) चेटः = दास, नौकर।

२५ पृष्ठ—वयस्य = मित्र । स्वाधीनजीवितस्य = अपने अधीन है जीना जिसका।

२६ पृष्ठ—स्वगतम् = अपने मनमें । प्रकाशम् = प्रकट। पराणयामि = ले जाता हूँ। वंशदण्डेन = बांस की लाठी से ॥

२७ पृष्ठ—वध्यपालिका = मारने की वारी। खण्डयति = तोड़ डालता है (खडि+णि+लट्)।

२८ पृष्ठ—गगनतले = आकाश में। वसनपातिका = कपड़ों का परिवर्तन ( बदलना )।

'वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्ययानि संयाति नवानि देही॥' (गीतायाम्)

सन्धारय = संभाल ( सम्+धारि+लोट् ) ।

२९ पृष्ठ—सुरपतिभवन = इन्द्र का घर (स्वर्ग)।

३० पृष्ठ—उत्क्रामन्ति = निकलते हैं। ( उद्+क्रम्+लट्) निष्क्रान्तः = निकल गया । व्यवसितम् = करने का उद्योग किया है ।

३१ पृष्ठ—प्रत्यभिजानाति = पहचानता है [ प्रति+अभि+ज्ञा+लट् ]। चरणसंवाहकः=पांव दाबने वाला । द्यूत=जुआ । शाक्यश्रमणकः=शाक्यमुनि का अनुयायी ( बौद्ध ) संन्यासी । प्रवहणविपर्यासेन=रथ के बदलने से । जनसमवायः=मनुष्य समूह । ध्रियते=जीता है ( धृञ्+लट् ) ।

३२ पृष्ठ—आर्जवम्=सरलता ( सच्चाई ) । न्यास= धरोहर । यज्ञवाटस्थः=यज्ञ के मार्ग में स्थित । कारागारे=कैदखाने में । तत्रभवान्=पूज्य ।

३३ पृष्ठ—निगडितः=जकड़ा हुआ (नि+गड+क्त)। राष्ट्रियबन्धुः=नीच राजा का साला ( यह गाली में प्रयोग किया जाता है ) ।

३४ पृष्ठ—गर्भदासीपुत्रि !=यह गर्भदासी शब्द गाली में प्रयोग किया जाता है। विलपन्तम् = रोते हुए को ।

पावके=आग में । जनसंमर्दः = लोगों की भीड़ ।

दुःखव्यापृततया = दुःख में पड़ी हुई होने से ।

प्रत्ययते = विश्वास करता है ।

३५ पृष्ठ—चेलाञ्चलम् = कपड़े की छोर को । चिताधि-रोहणम् = चिता पर बैठने को (सती होने को) ।

३६ पृष्ठ—भर्त्रिनीम् = स्वामिनी को । पर्यवस्थापय = संभालो,ठहराओ (परि+अव+स्था+लोट् ) आर्य-पुत्र = स्त्री पति को 'आर्यपुत्र' कहकर पुकारती है। बालिशम् = अबोध बच्चे को ।

३७ पृष्ठ—संविधानकम् = संघटन, अकस्मात् मिलाप । प्रव्रज्यायाम् = संन्यास में ।

३८ पृष्ठ—सर्वविहारेषु = सब बौद्धमठों में ।

कुलपतिः=मठाध्यक्ष। 'एको दशसहस्राणि योऽन्नदानादिना भरेत् । स वै कुलपतिः' इत्युक्तः । १०००० लड़कों को भोजन वस्त्रादि देकर पढ़ाता है । सुवृत्त = सदाचारी ।

# पितृभक्तिफलम् ।

३९ पृष्ठ—रुष्टः = गुस्से हुआ २ ( रुष्+ क्त )।

शुक्राचार्यः = दैत्यों के गुरु का नाम है। (भृगुपुत्र, माता–पुलोमा, भाई च्यवन, पुत्री देवयानी )।

ययातिः = चन्द्रवंशी राजा का नाम है। ( नहुष का पुत्र, शुक्राचार्यपुत्री देवयानी, तथा वृषपर्वपुत्री शर्मिष्ठा का पति ।। "बृहस्पति के पुत्र कच ने देवयानी को शाप दिया था कि तेरा विवाह ब्राह्मण से नहीं होगा, इसी कारण क्षत्रिय राजा ययाति से इसका विवाह हुआ यही एक 'प्रति-लोम' विवाह हुआ ।।" देवयानी के दो पुत्र 'यदु, तुर्वसु' और शर्मिष्ठा के 'द्रुह्यु, अनु, पुरु, तीन पुत्र हैं ।।

संक्रामय = किसी दूसरे में पहुँचा दो ( दे दो ) ( सम्+क्रम्+णि+लोट् )। वार्धकेन = बुढ़ापे से। पलितानि = सफेद । रोमाणि = बाल, केश । वलीक्रान्तम्=झुरियोंवाला । जराम्=बुढ़ापे को। सितश्मश्रुः = सफेद दाढ़ी वाला । गात्र = शरीर।

जिघृक्षुः = ग्रहण करने की इच्छा वाला ( ग्रह्+सन्+उ )।

४० पृष्ठ—वयस् = आयु । प्रत्याख्यातः = इन्कार किया गया ( प्रति+आ+ख्या+क्त ) । प्रतिपद्यस्व= स्वीकार करो ( प्रति+पद्+लोट् )। संकीर्णाचाराणाम्=मिले जुले अथवा भ्रष्ट आचार वालों का। पिशिताशिनाम्=मांस खाने वालों का। रोचते= पसन्द है। 'रुच्' के योग में चतुर्थी होती है। अङ्गजः=पुत्र। तनयः=पुत्र।

४१ पृष्ठ—संपत्स्यते=सिद्ध होगा ( सम्+पद्+लृट् )। कनीयांसम्=छोटे को। पौरवेण=पुरु के।

४२ पृष्ठ—खिन्नः=खेद को प्राप्त हुआ ( दुःखित हुआ हुआ ) ( खिद्+क्त )। हविषा=आहुति [ हवन-द्रव्य घी आदि ] से । कृष्णवर्त्मन् = अग्नि। निर्द्वन्द्वः = सुख–दुःख, हानि–लाभ, आदि द्वन्द्वों से रहित।

४३ पृष्ठ—नियोगः=आज्ञा।

## भोजकुमारस्य राज्यप्राप्तिः।

अमात्य=मन्त्री । अनुजम्=छोटे भाई को।

४४ पृष्ठ—वीक्ष्य=देख कर [वि+ईक्ष्+ल्यप] । सोदरः =

पीला है मुँह जिसका। प्रेषयित्वा = भेजकर [ प्रेष + णि + क्त्वा ]।

४७ पृष्ठ—अप्रतिहता = स्वस्थ, ठीक। यामे = प्रहर [पहर] में। वङ्गदेश = बंगाल । प्राहिणोत् = भेजा । [ प्र+हि+लङ् ] । सौधम् = महल को ।

४८ पृष्ठ—पोत = छोटा बच्चा । राम = दशरथ का पुत्र रामचन्द्र । ब्रह्मपुत्रकःवशिष्ठः = ब्रह्मा का मानसपुत्र वसिष्ठ, स्त्री अरुन्धती, पुत्र शक्ति, पौत्र पराशर ।

"भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहःक्रतुः ।
मनुर्दक्षो वशिष्ठश्च पुलस्त्यश्चाऽपि ते दश" ॥६०॥
ब्रह्मणो मानसा ह्येते उत्पन्नाः स्वयमीश्वराः ॥६१॥
[ मत्स्यपुराण १४५ अ० ]

अवनी = पृथिवी । वैरञ्चि = वशिष्ठ । ज्ञ = जाननेवाला [ जानाति इति ] । रभस = शीघ्रता । आविपत्तेः = विपत्ति अथवा दुःख के अन्त होने तक। शल्य = बाण, कण्टक । विपाकः = फल । उल्लोलकल्लोलाः = उछलती हुई, लहरों वाले । पयोधयः = बादल,वा समुद्र ।

प्लावयिष्यन्ति = डूबोवेंगे (प्लु + णि + लिट्)।

४९ पृष्ठ—तूष्णींबभूव = चुप हो गया। मिष = बहाना। भूताविष्ट = जिसमें भूत ने प्रवेश किया हुआ हो। ग्रहग्रस्त = बुरे ग्रहों से ग्रसा हुआ।

५० पृष्ठ—खड्ग = तलवार। अपकोशं कृत्वा = मियान से बाहर निकाल कर। उष्ट्र = ऊँट। वाजिशालाम् = घुड़साल को। जघ्नुः = मारा। प्रतोलीषु—नगर की गलियों में। प्राकारवेदिकासु=बाहर की दीवार (फसील) पर बनी हुई वेदियों में। विटङ्केषु=(कबूतरों के बैठने के लिये) स्थान, सब से ऊंचा स्थान) बुर्जों पर। भेरी=नगारा। पटह=ढोल। मुरज=मृदङ्ग। कुन्तेन=भाले से। पाशेन=फांसी से (रस्सी से)। परशुना=कुल्हाडी से। योषितः= स्त्रियां। व्यधुः=किया (वि+धाञ्+लुङ्)।

५१ पृष्ठ—पितृव्य=चाचा। [पिता का भाई]। पिधाय= ढक करके। अपि+धाञ्+ल्यप्)। गमित= प्राप्त कराया, भेजा (गम् + णि + क्त)। दशापि दिशामुखानि=चार दिशा [पूर्व, दक्षिण, पश्चिम,

उत्तर ) चार उपदिशा ( नैर्ऋत्य,वायव्य,ईशान, अग्नि ) ऊपर (आकाश) और नीचे ( पाताल ) दसों दिशाओं के मुख ।

वैश्वानर = अग्नि । धूमस्तोकेनैव = थोड़े धूएं से भी । मलीमस = मैला पश्चिमपयोनिधा= पश्चिम समुद्र में । मग्ने=डूबने पर । मार्त्तण्ड-मण्डले=सूर्य । व्यादिष्टः—कहा । ( वि+आ+दिश्+क्त) ।

रामे प्रव्रजनम् = राम का कैकेयी की आज्ञा से १४ चौदह वर्ष के लिये राजपाट छोड कर वन को जाना ।

बलेर्नियमनम्=विरोचन पुत्र, बाण के पिता राजा बलि का 'वामन' अवतार द्वारा प्रतिज्ञाबन्धन में बांधा जाना । विजयी अभिमानी बलि राजा से देवरक्षा के लिये विष्णु ने अपने दो पगों में सारे पृथिवी और आकाश को माप लिया और तीसरे पग से बलि के शरीर को दबा कर पाताल में भेज दिया ( भागवतपुराण, महाभारत कथा ) ।

पाण्डोः सुतानां वनम् = पाण्डवों का १२ वर्ष वनवास, १ वर्ष अज्ञातवास में रहना।

वृष्णीनां निधनम् = वृष्णि [ यादव ] वंश का नाश—'स्त्री–रूप बनाये हुए जाम्बवती से पैदा हुए श्रीकृष्ण के पुत्र, दुर्योधन-पुत्री लक्ष्मणा के पति साम्ब के पेट पर लोहे का तसला बांध कर यदुवंशियों ने दुर्वासा का उपहास किया था कि बतलाओ 'इस के गर्भ में क्या है' । दुर्वासा ने उत्तर दिया कि जो तुम्हारे वंश का नाश करेगा। इन्होंने उस तसले से निकला हुआ मूसल रगड़ कर समुद्र में फेंक दिया ! इसका चूरा एरका के रूप में समुद्र के तट पर उगा। निदान सारे यादव मद्य पीकर मदमत्त हुए और उसी एरका को उखाड़ कर आपस में प्रहार करके नष्ट हुए [ भागवतपुराण कथा ]।

कारागारनिषेवणम् = कैदखाने में रहने को।

लङ्केश्वरे = पुलस्त्य के पौत्र, विश्रवा के पुत्र रावण में। वटवृक्षस्य=बड़ के। पुटीकृत्य=डोना बनाकर।

जङ्घाम् = जांघ को । छुरिकया = छुरी से ।
पुटके = डोने में ।

५२ पृष्ठ—वैराग्यमापन्नः = वैराग्य को प्राप्त हुआ हुआ ।
स्फुरद्वक्त्रम् = चमकते मुख को ।

५३ पृष्ठ—मान्धाता = क्षत्रिय, सूर्यवंशी युवनाश्व का पुत्र, इसकी स्त्री शशबिन्दु की पुत्री बिन्दुमती, इसके पुत्र पुरुकुत्स, अम्बरीष, मुचुकुन्द ( भा० ९ । ६, वा० ८ । ८ ) ।

यह एक चक्रवर्ती राजा हुआ है इस के जन्म-समय में इन्द्र ने प्रसन्न होकर कहा था कि 'माम् धाता' अर्थात् यह मेरा रक्षक है अथवा—'माम् धास्यति' अर्थात् मुझको पान करेगा, अतः इसका नाम 'मान्धाता' ही पड़ गया ।

वसुमती = पृथिवी । चेलाञ्चलानिलेन ( कपड़े की ) पल्ले की हवा से । कुरर = पाक्षिविशेष, कूंज ।

५४ पृष्ठ—किंवदन्ती = अफवाह । करकालितदन्तीन्द्रदन्त-दण्डः = हाथ में ग्रहण किया है श्रेष्ठ हाथी के दांत का दण्ड जिसने । कलाप = समूह । कौशेयकौ-

पीनः = रेशमी लंगोटीवाला । कापालिकः = अघोरी साधु । निर्झर = झरना । करतलामलकवत् = (हाथ की हथेली पर आम की तरह) प्रत्यक्ष । संचय = इकट्ठा करना ।

५५ पृष्ठ—कुड्य = दीवार । रुद्रकल्प = शिवस्वरूप । बधिरीकुर्वन् = बेहरा करता हुआ ।

---

# कठिन वाक्यों के अर्थ।

---

१ पृष्ठ—दारिद्र्यादिह ममेदृशमगौरवं जातम् ।

अर्थ—निर्धनता के कारण यहां मेरा इतना निरादर हुआ है ।

दैवज्ञो मम पतिरिति ।

अर्थ—मेरा पति ज्योतिषी है ।

४ पृष्ठ—प्रच्छन्नपातका जनाः शङ्कया एवं प्रकाशन्ते—

अर्थ—छिप कर पाप करने वाले डर के कारण इस तरह स्वयं प्रकाशित हो जाते हैं । ( अपना भेद आप कह देते हैं ) ।

५ पृष्ठ—असाध्यं साधयत्यर्थं हेलयाऽभिमुखो विधिः—

अर्थ—अनुकूल हुआ २ विधाता अनायास [ बिना परिश्रम के ] ही असाध्य अर्थ को [ न सिद्ध होने योग्य काम को ] सिद्ध कर देता है ।

६ पृष्ठ—भगवता विधात्रा यदेव विधीयते तत् सर्वमेव शुभाय ।

अर्थ—विधाता जो करता है वह सब भलाई के लिये होता है ।

७ पृष्ठ—देवपादा यथाज्ञापयन्ति ।

अर्थ—आप जैसे आज्ञा करते हैं ।

१० पृष्ठ—आत्मकर्मफलानुरूपमतत् ।

अर्थ—ये मेरे अपने कर्मों के फल के अनुकूल ही है ।

१८ पृष्ठ—पुरुषभाग्यानाम् अचिन्त्याः खलु व्यापाराः ।

अर्थ—पुरुषों के भाग्यों की घटनाएं अचिन्तनीय होती हैं ।

"स्त्रियाश्चरित्रं पुरुषस्य भाग्यं
देवा न जानान्ति कुतो मनुष्यः" ।

सर्वगात्रेषु इत्यादि—प्राचीन समय में वध्यपुरुषों की पीठ पर लाल चन्दन के [ हस्तकैः ] पंजे के निशान और [ पिष्ट ] पीठी [ उड़द या चावल का आटा ] बखेरी जाती थी ।

१९ पृष्ठ—परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद् विषमास्थितस्य

अर्थ—अच्छी दशा में दूसरे भी अपने हो जाते हैं परन्तु विपत्ति के समय कोई मित्र नहीं बनता।

२१ पृष्ठ—किं राहुगृहीतोऽपि चन्द्रो न वन्दनीयो लोकस्य

अर्थ—राहु से ग्रसा हुआ चान्द क्या लोक से वन्दना के योग्य नहीं होता अर्थात् महापुरुष विपत्ति में पड़े हुए भी आदर के योग्य होते हैं।

२४ पृष्ठ—ईदृशं दासत्वम्, यत् सत्यम् अपि न विश्वसान्ति।

अर्थ—दासता ऐसी बुरी है कि दास की कही हुई सच्ची बात का भी लोग विश्वास नहीं करते।

२५ पृष्ठ —सर्वम् अस्य मूर्खस्य संभाव्यते।

अर्थ-यह मूर्ख सब कुछ कर सकता है।

स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्यागः।

अर्थ—तुम स्वतन्त्र हो, तुम्हें प्राण त्यागना उचित नहीं।

२८ पृष्ठ—न भीतो मरणादस्मि—

अर्थ-मरने से मैं डरता नहीं, दुःख इसी बात का है कि मेरा यश दूषित होगया, यदि मैं निर्दोष होकर

मरूं तो वह मौत भी मेरे लिये पुत्रजन्म के समान आनन्ददायक है।

'अपयशो यद्यस्ति किं मृत्युना' [ भर्तृहरिः ]।

गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते।

अर्थ—आकाश में विचरते हुए चन्द्रसूर्य भी विपत्ति को प्राप्त होते हैं।

लोके कोऽप्युत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते।

अर्थ—संसार में कोई उठा हुआ [ उन्नति को प्राप्त हुआ ] गिर जाता है [ अवनति को प्राप्त हो जाताहै ], कोई गिरा हुआ भी [ अवनति को प्राप्त हुआ भी ] उठ खड़ा होता है [ उन्नति पाता है ]।

३० पृष्ठ—उत्क्रामन्ति मे प्राणाः।

अर्थ—मेरे प्राण निकल रहे हैं।

३२ पृष्ठ—सर्वत्र आर्जवं शोभते।

अर्थ—सब बातों में सरलता ही शोभा देती है।

यथाह तत्रभवान्।

अर्थ—जैसे आप कहते हैं।

४२ पृ०—हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते ।

अर्थ—हवि ( हवन की चीजों घी आदि—से जैसे आग अधिक बढ़ती वैसे विषय भोग से कामना बढ़ती है ।

४३ पृ०—यः स्वधर्मं नानुतिष्ठति स ज्येष्ठोऽपि न ज्येष्ठ-इति मे मतिः ।

अर्थ—जो अपने धर्म का पालन नहीं करता वह उमर में बड़ा होता हुआ भी बड़ा नहीं है-यह मैं मानता हूँ !

मातापित्रोर्वचनं यः करोति स एव पुत्रः ।

अर्थ—माता पिता के वचन को जो मानता है ( उन की आज्ञा का जो पालन करता है ) वही पुत्र है ।

४५ पृ०—किं किं न साधयति कल्पलतेव विद्या ।

अर्थ—कल्पलता के समान विद्या क्या २ सिद्ध नहीं करती

४७ पृ०—अर्थोष्मणा विरहितः पुरुषः क्षणेन सोऽप्यन्य एव भवतीति विचित्रमेतत् ।

अर्थ—धन की गर्मी से रहित वही पुरुष छिन में और

ही हो जाता है, यह विचित्र है !

देवादेशः प्रमाणम् ।

अर्थ—आपकी आज्ञा प्रमाण अथवा स्वीकार है !

५१ पृ०—सर्वः कालवशेन नश्यति नरः को वा परित्रायते।

अर्थ—सब लोग काल वश से ( मौत आने पर ) नष्ट हो जाते हैं, कौन किसी को बचाता है ।

५२ पृ०—एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ।

अर्थ—एक धर्म ही मित्र है जो मरने पर भी साथ जाता है और तो सब कुछ शरीर के साथ ही नाश को प्राप्त हो जाता है ।

---

# NOTICE.

—— :-0-: ——

We beg to inform the students and the teache hat the following are some of our publications whi re prescribed as Text Books by the Text Book Co nittee, Punjab for Primary and Middle Classes or he Punjab University for High Classes:—

| | | Rs. | A. | |
|---|---|---|---|---|
| 1. | Hindi Vyakarna by Pandit Ram Chandra Kushal ... ... ... | 1 | 0 | |
| 2. | Bal Patar Bodh by Amar Nath (a Hindi Letter Writer) ... ... ... | 0 | 5 | 0 |
| 3. | Gifts of Science by Baboo Ram | 1 | 0 | 0 |
| 4. | Notes and [illegible] Kavya Sangrah | 0 | 8 | 0 |
| 5. | A Manual of Sanskrit Grammar by Ganpat Rai and [illegible] Part I for [illegible] classes Re. 0-10-0 and complete book for High classes ... ... ... | 2 | 0 | 0 |
| 6. | Hindi Sahit Sudha by Sant Ram, B.A. | 1 | 0 | 0 |
| 7. | Praveshika Hindi Viakarn by Ram Dhin | 1 | 0 | 0 |
| 8. | Matric Hindi Viakarn by Raja Ram ... | 1 | 0 | 0 |
| 9. | [illegible] anskrit Sopana to learn Sanskrit in [illegible] months without the help of a teacher. [illegible] a Set of four books) ... ... | 1 | 9 | 0 |
| 10. | [illegible] Geography by Sohan Lal, B.A. [illegible] du or English ... ... | 1 | 12 | 0 |
| 11. | [illegible] Dvadashadhyayi by Pandit [illegible] Dev, M.A., M. O. L. ... | 2 | 0 | 0 |
| 12. | Panjab Hindi Readers I, II, III, for Middle classes by Sant Ram, B.A. and Bishan Das Puri, M.A. Re. 0-7-6, 0-7-6 and | 0 | 8 | 0 |
| | *vide* Circular No. 6 of 26th November, 1926, D. P. I., Punjab. | | | |
| 13. | *Success in English* in Matriculation Examination by Mathra Das ... | 1 | 6 | 0 |



We sell all sorts of Text Books, their notes exercise books and stationery.

**DAS BROTHERS,**

*Publishers & Booksellers,*

# NOTICE.

—— :-o-: ——

We beg to inform the students and the teache that the following are some of our publications whi are prescribed as Text Books by the Text Book Co mittee, Punjab for Primary and Middle Classes or the Punjab University for High Classes:—

| | | Rs. | A. | |
|---|---|---|---|---|
| 1. | Hindi Vyakarna by Pandit Ram Chandra Kushal ... ... ... | 1 | 0 | |
| 2. | Bal Patar Bodh by Amar Nath (a Hindi Letter Writer) ... ... ... | 0 | 5 | 0 |
| 3. | Gifts of Science by Baboo Ram | 1 | 0 | 0 |
| 4. | Notes and [illegible] Kavya Sangrah ... | 0 | 8 | 0 |
| 5. | A Manual of Sanskrit Grammar by Ganpat Rai and [illegible] Part I [illegible] classes Re. 0-10-0 and complete book for High classes ... ... ... | 2 | 0 | 0 |
| 6. | Hindi Sahit Sudha by Sant Ram, B.A. | 1 | 0 | 0 |
| 7. | Praveshika Hindi Viakarn by Ram Dhin | 1 | 0 | 0 |
| 8. | Matric Hindi Viakarn by Raja Ram ... | 1 | 0 | 0 |
| 9. | Bala Sanskrit Sopana to learn Sanskrit in two months without the help of a teacher. (It is a Set of four books) ... ... | 1 | 9 | 0 |
| 10. | Modern Geography by Sohan Lal, B.A. B.T., Urdu or English ... ... | 1 | 12 | 0 |
| 11. | Vyakarna Dvadashadhyayi by Pandit Charu Dev, M.A., M. O. L. ... | 2 | 0 | 0 |
| 12. | Panjab Hindi Readers I, II, III, for Middle classes by Sant Ram, B.A. and Bishan Das Puri, M.A. Re. 0-7-6, 0-7-6 and | 0 | 8 | 0 |

*vide* Circular No. 6 of 26th November, 1926, D. P. I., Punjab.

| | | | | |
|---|---|---|---|---|
| 13. | *Success in English* in Matriculation Examination by Mathra Das ... | 1 | 6 | 0 |

We sell all sorts of Text Books, their notes exercise books and stationery.

**DAS BROTHERS,**

***Publishers & Booksellers,***